5.5

# साहित्यालङ्कारः



म.म. रेवाप्रसादो द्विवेदी

साहित्यागमः

ध्वनिः (अमान्यः)

शब्दशक्तयः (अमान्याः)

विकल्पवादः (मान्यः)

प्रकाशकम् : कालिदाससंस्थानम्, वाराणसी-5

नव्यन्याय शास्त्राय कार्ये प्रतिष्ठापूर्वेष
पं श्री वशिष्ठ त्रिपाठिभ्यः सादरमर्पणम् -
रे.प्र. द्विवेदी
१२.८.१६

॥श्रीः॥

सनातनकविश्रीरेवाप्रसादद्विवेदिकृतिः

# साहित्यालङ्कारः

## Sāhityālankāraḥ

(१-६५७ कारिका)


**म.म. रेवाप्रसादो द्विवेदी**
प्रोफेसर इमेरिटस (संस्कृत)
काशीहिन्दूविश्वविद्यालयः, वाराणसी



प्रकाशकं
**कालिदाससंस्थानम्**
वाराणसी-५

# साहित्यालङ्कारः

**SĀHITYĀLAṄKĀRAḤ**

A fresh and just definition of poetry,
with the poetic History based on poetical elements.

**ISBN : 978-81-926427-5-8**

**मुम्बईस्थ-एम.आर.मोरारका-फाउण्डेशनसाहाय्येन प्रकाशितः।**
**Published with finanacial assistance by**
**M.R. Morarka Foundation, Mumbai**

प्रकाशकम्
**कालिदाससंस्थानम्**
२८महामनापुरी, पो.काहिविवि,
वाराणसी-२२१००५
फोन-(०५४२)२५७०६८२



**प्रकाशनवर्षम् - २०१५**

**मूल्यम् - रु. १५०/-**

**मुद्रकः**
**श्रीजी प्रिण्टर्स**
**नाटी इमली, वाराणसी**
**फ़ोन नं. 0542-2201104**
**E-mail : shrijeeprint@gmail.com**

# प्रणतिः

साहित्यशास्त्रं खलु शारदाया
उत्सङ्गपुष्टं स्वमपत्यरत्नम् ।
तत्संस्कृति - भारतवर्ष - सुस्थ-
शास्त्रप्रियाणां प्रथमोऽस्ति धर्मः ।।

तस्यामसौ दिशि सनातननाम्न
एतस्यास्तेतरां बत पदक्रम उच्चभक्तिः ।
ग्राह्यस्स एष विदुषां प्रवरै-
रनेन भावेन वृद्धचरणेषु नतेः स मार्गः ।।

सनातनस्य
रेवाप्रसादस्य द्विवेदिनः
साहित्याचार्यस्य
काशीहिन्दूविश्वविद्यालयीयस्य ।।

## आसनबन्धः

साहित्यञ्चेत्यलङ्कारश्चेत्यनर्थान्तरम्, द्वयोः ।
भूमैवार्थः कलायाः सा परस्याः परमा स्थितिः ।।१।।

साहित्यं बाहुविध्येन व्युदपादि, प्रवृत्तितः ।
परन्तु लङ्घिताम्भोधेः पावमानेः सखा तु तत् ।।२।।

कारिकायामदस्तत्त्वं दृष्टान्तैः प्रतिपादितम् ।
शरदां त्रिंशतः पूर्वं पौनरुक्त्यं हि न क्षमम् ।।३।।

काव्यालङ्कारकारिकायां कारिके ३१-३२ (१९१४सं.)।

अलङ्कारे तु कारार्थः स्वरूपं प्रकृतेस्ततः ।
रसवद् ब्रह्मणस्तत्र पर्यायत्वं प्रसिद्ध्यति ।।४।।

काव्यालङ्कारसंज्ञायां काव्यशब्दो य ईक्षितः ।
स्थानं तस्यात्र साहित्यपदं तस्मान्निधीयते ।।५।।

काञ्चीतः शारदादेशं प्राप्योत्थाय ततश्च सा ।
पराम्बाऽवन्तिकां प्राप्ता रक्षणाय समग्रतः।।६।।

तत्रापोषि तु योगीन्द्रैर्भर्तृहर्यादिभिर्बुधैः ।
भाट्टैः प्राभाकरैश्चापि सैषा काशीमुपाश्रिता ।।७।।

नव्यन्यायकषाश्मान्तःकषणैः श्लक्ष्णविग्रहा ।
सैवाद्य निर्मला भूत्वा विश्वेशे क्षीरतां श्रिता ।।८।।

नाऽत्र ध्वनिर्न वा शब्दशक्तिर्नापि जरासुतः ।
अर्थद्वयात्माऽऽस्वादादिविकल्पः सर्वमुज्ज्वलम् ।।९।।

पूता स्वतः पूततरा गङ्गाम्भःसीकरैस्तु या ।
विश्वेश्वरमिहाभ्यर्च्य जाता पूततमाऽद्य सा ।।१०।।

धाम्नां चतुष्टयीं तद्वत् कल्पानां पञ्चकं श्रिता ।
साहित्यविद्या याः क्रान्तीस्तिस्रः क्लेशोत्तराः पपौ ।।११।।

ताः पश्यन्त्वत्र संक्षिप्तमैतिह्यं चापि निस्तुषम् ।
त्यक्त्वा श्रद्धां क्वचित्, शङ्कां परत्र च, तटस्थिताः ।।१२।।

अलङ्कृतिः कुण्डलहारतुल्या
देहाय बाह्याय समस्ति बाह्या ।
यद्वान्तरा नायकनायिकादि-
शोभाविलासा इव ताश्च चिन्त्याः ।।१३।।

विकल्परूपे क्व नु वस्तुसार्थे
बाह्यत्वदोषो लभतेऽवकाशम् ।
स्थूलाऽस्त्यसौ, किन्तु मनुष्यवृत्ति-
रलङ्कृतार्चासु सुमादिपूजा ।।१४।।

अर्चासु अर्चावतारतया कल्पितासु निर्मितहारादिषु मूर्त्तिषु ।

यद्धूपदीपादिसमर्पणं यत्
क्षौमादिदानं च तदस्ति बाह्यम् ।
बाह्याय देहाय तु देवतायाः
स भावयोगादुपहारकल्पः ।।१५।।

अर्धं जरत्या इति नात्र दोषो
लब्धुं प्रवेशं क्षमते, मनुष्यः ।
तत्त्वं निराकारमुपासितुं यत्
साकारमप्याद्रियते प्रकृत्या ।।१६।।

किञ्च द्वये तिष्ठति सद्विकल्पे
प्रसिद्धमात्रानुसृतिश्च मोहः ।
ततोऽस्तमायाति यतः प्रकृत्या
प्राप्ता प्रतिष्ठा व्यवहारसीम्नि ।।१७।।

प्राप्ते चिरान्मुहूर्त्तेऽस्मिन्नवतीर्णाः भुवस्तले ।
भ्रष्टपूर्वास्तु तत्तासु हिमहैमनवीथिषु ।।१८।।

इन्द्रप्रस्थं प्रविष्टाः स्मो वकप्रस्थं निषेव्य तु ।
युधिष्ठिरस्य निर्वास्य धार्त्तराष्ट्रीमनेत्रताम् ।।१९।।

साहित्यविद्यावरवर्णिनीं तु
शैलात्मजायास्तनयां यदानीम् ।
यायावरीये ननु वत्सगुल्मे
सारस्वतेयो वर ऊढवाँश्च ।।२०।।

सम्बन्धिनीत्वं च गते ततश्च
प्रभृत्युमा चैव सरस्वती च ।
प्राचेतसे धामनि संव्यधत्तां
यं कौतुकागारवरं तमेतौ ।।२१।।

प्रावीविशेताञ्च महान्ति काव्याऽ
न्यचीक्लृपेताञ्च ससर्गबन्धैः ।
विप्रूंषि तेषामुपहृत्य लोका-
नकालदंशान्यनुचोक्रुशीतः ।।२२।।

रथद्वितीया वि. २०७२
१८ जुलाई २०१५
काशी

रेवाप्रसादस्य द्विवेदिनः
'सनातनस्य'

।।श्रीः।।

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्याँश्च हस्तचरणश्रवणत्वगादीन्
प्राणान् नमो भगवते पुरुषाय तुभ्यम् ।।

श्रीभागवते ध्रुवस्तुतिः ४.९.६

# साहित्यालङ्कारे विषयानुक्रमः



०००

॥श्रीः॥

सनातनकविश्रीरेवाप्रसादद्विवेदिनः

# साहित्यालङ्कारः

०० 

वन्देऽहं भारतं वर्षं चतुर्धामप्रतिष्ठितम् ।
वन्दे साहित्यशास्त्रं च चतुर्धामप्रतिष्ठितम् ॥१॥

## धामचतुष्टयम्

धामसु प्रथमं काञ्ची यत्र दण्डी बभूव वै ।
तत्रैव क्वचनासीद् वै भरतोऽपि महामुनिः ॥२॥

द्वितीयं शारदाधाम कश्मीरेषु प्रतिष्ठितम् ।
यत्र भामह इत्याद्या अभूवन् काव्यशास्त्रिणः ॥३॥

तृतीयं तु महाकालधाम धारापुरीस्थितम् ।
यत्रासीद् धनिकः श्रीमान् भोजराजश्च शास्त्रकृत् ॥४॥

चतुर्थं धाम काशी श्रीविश्वेश्वर-विहारभूः ।
अप्पय्यदीक्षितः श्रीमानाचार्योऽत्र व्यराजत ॥५॥

## १.१.साहित्यागमः

### कल्पपञ्चकम्

साहित्यशास्त्रे पञ्चैव कल्पाश्च प्रभवन्तकि ।
आद्यस्तु पूर्णताकल्पो दोषाभावात्मकस्तु सः ॥६॥

द्वितीयो गुणकल्पस्तु वर्णधर्मात्मकः स्फुटम् ।
कल्पेऽस्मिन् काव्यता सिद्धाऽलङ्क्रिया त्ववशिष्यते ॥७॥

---

१. द्रष्टव्या काव्यालङ्कारकारिकायास्तृतीयं सं. 'काव्यतत्त्वानि' (पृ.७,८)

कल्पस्तृतीयः काव्यानामस्फुटालङ्क्रियात्मकः ।
लक्षणेत्याख्यया मान्यः संख्यातीतो व्यवर्त्तत ।।८।।

स्फुटालङ्कारकल्पस्तु चतुर्थः कल्प उच्यते ।
ब्रह्मशब्देन, नो तस्मात् परं किञ्चिदपेक्ष्यते[१] ।।९।।

आगमनाम

आगमोऽग्निपुराणेऽस्य कथितस्त्वहमागमः ।
अकारादिर्हकारान्ता सृष्टिः शब्दार्थयोर्मता ।।१०।।

अहमेवास्त्यलङ्कारः कारस्य स्वार्थतासृतौ ।
ब्रह्मैवाभिहितं नान्यदहालमिति संज्ञया ।।११।।

अरंपदे श्रुतिर्या तु रेफात्मा सैव लश्रुतिः ।
कालस्य पर्यये जाता तमेवार्थं विवृण्वती ।।१२।।

अलङ्क्रियायाः पूर्णत्वे हेतुतां प्रतिपद्यते ।
रसोक्तिरेव वक्रोक्तिस्वभावोक्तिसमुत्थिता ।।१३।।

रसश्चमत्क्रियारूपः काव्यकामे रतिस्तु सा ।
राधायां कृष्ण एवोतः कृष्णे राधेव तत्त्वतः ।।१४।।

औपम्यं रूपणं यद् वा निगीर्याध्यवसानकम् ।
उक्तित्वं, किं चमत्कारं रसं त्यक्त्वा, प्रपद्यते ।।१५।।

लक्षणाऽलङ्क्रियाऽद्वैते कल्पानां त्रयमेव तु ।
गुणानां सांख्यशास्त्रे नु मन्यते सदृशक्षमम् ।।१६।।

रसानां च ध्वनीनां च वक्रोक्त्यौचित्ययोरपि ।
सीमाऽन्तिमोऽस्त्यलङ्कारः सा काष्ठा सा समाहितिः ।।१७।।

अत एव ब्रह्ममात्रमात्मा काव्येऽपि दर्शने ।
यथा, भारतवर्षीया भिद्यते दृङ् न कुत्रचित् ।।१८।।

रसो यस्माद् विभावादिसामग्री साऽस्त्यलङ्क्रिया ।
काव्यकाये विदग्धानामात्मा यः स रसी भवेत् ।।१९।।

चतुर्ण्णामपि कल्पानां साहिती काव्यगा तु या ।
तामेतां भोजराजस्तु साहित्यमिति गायति ।।२०।।

काव्ये मर्म स्पृशद्भिर्या वैदग्धी दर्शिता न सा ।
पारिभाषिकशब्दानां प्रपञ्चादतिरिच्यते ।।२१।।

क्षेमेन्द्रः कुन्तकश्चैव महिमा राजशेखरः ।
अत एव न काव्यत्व-स्तरानुज्जगुरीदृशः ।।२२।।

गद्यपद्यादयो भेदा बाह्या एव न तत्कृते ।
शास्त्रे चर्चाऽनिवार्याऽस्ति स्वरूपात् सा न भिद्यते ।।२३।।

कल्पेषु पञ्चमः कल्प एकः सर्वसह्रो भवेत् ।
द्वादशत्वमतस्तेषां नैव रोहति चेतनाम् ।।२४।।

साहित्यमेकं मार्त्तण्डमण्डलं राशिभिर्यथा ।
द्वादशत्वमुपैत्येवं साहित्ये द्वादशाऽऽत्मता ।।२५।।

अन्तिमानां त्रयाणां वै सम्बन्धानां तु काव्यता ।
नवानामन्वयानां तद् भाषामात्रत्व-मिष्यते ।।२६।।

अन्तिमास्त्रयो १. अलङ्कारादानम् २. गुणाधानम् ३. रसावियोगः इति ।
अन्ये नव १. अभिधा २. विवक्षा ३. तात्पर्यम्
४. प्रविभागो ५. व्यपेक्षणम्, ६. सामर्थ्यम्
७. अन्वयः ८. एकार्थीभावः ९. दोषहानम् ।
न्यायाधिकरणादिष्वपि दोषाभावोऽपेक्ष्यते ।

०००

## १.२ काव्यलक्षणम्

### सुन्दरविकल्पवादः

विकल्पो वस्तुशून्यो यः शब्दश्रवणतो मतौ ।
समुत्पतति चित्तस्य बोधवृत्तिरियं सती ।।२७।।

सौन्दर्यमात्रमाश्रित्य काव्यमित्यभिधीयताम् ।
शब्दार्थावित्ययं शब्दः शब्दार्थ इति पठ्यताम् ।।२८।।

शाब्दो विकल्पः, शब्दो न, स्वयमर्थं तु संस्पृशेत् ।
विकल्पोऽर्थस्य यस्तं हि स्पृशेदेषा विकल्पना ।।२९।।

शब्दस्यार्थेन सम्बन्धं मन्यन्ते व्यावहारिकाः ।
न योगिनश्च तद्वाचि श्रद्दधानाश्च पण्डिताः ।।३०।।

योगी = महर्षिः पतञ्जलिः । तथाहि तस्य सूत्रम् 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' (यो०सू० १.९) इति । अत्र श्रद्दधते धर्मकीर्त्ति-जयन्तभट्ट-भोजराजाः। अयमत्र भोजकृतः सर्वसमाहारः-(शृङ्गारप्रकाशः, पृष्ठ ३२९) -

विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
तयोरन्योन्यसम्बन्धो नार्थं शब्दाः स्पृशन्त्यपि ।। इति ।

द्र. अस्माकं काव्यालङ्कारकारिकागताः कारिकाः ७०,८६-१६९ ।

<u>विकल्पः सुन्दरः काव्यमि</u>ति काव्यस्य लक्षणम् ।
सर्वंसहं, भवत्यत्र प्रमाणं श्रीपतञ्जलिः ।।३१।।

धर्मकीर्त्तेर्न तत्र स्याज्जयन्तस्येव वैमुखी ।
भोजराजस्य यद्वद् वै लोचनादिकृतां न किम् ।।३२।।

ध्वनेराक्षेपभेदे यो लयस्तस्यास्ति देशना ।
आगमे तस्य नामापि स्पृश्यते किं न विद्वरैः ।।३३।।

ऋषीन् पूर्वभवान् ये वै मध्या उल्लङ्घ्य सौगताः ।
तेषामालोककर्तॄणां खण्डने क्व ह्यनौचिती ।।३४।।

आगमे काव्यशास्त्रस्य [१]गोत्रवादः प्रवर्त्तते ।
पितामहादयः पूर्वे पितरो हि भवन्ति नः ।।३५।।

महीयेत पितृत्वं च पौत्रत्वं चापि लौकिकम् ।
प्रथा सेयं व्यथां तावज्जनयेत् तार्किकादिषु ।।३६।।

शब्दशक्तिरिति श्रौतं वचोऽगत्या प्रकल्पितम् ।
ताण्डवं तु तदीयं यल्लोके तन्मूलनाशनम् ।।३७।।

व्यञ्जना यं प्रसूतेऽर्थं ततो जाते तु काचन ।
परैव शक्तिः स्वीकार्या ततः स्यादनवस्थितिः ।।३८।।

इत्येष सानातन-काव्यमार्गा-
गमोऽस्ति शुद्धः खलु निर्व्यलीकम् ।
धाम्नां चतुर्ण्णामिव हन्त पञ्च-
कल्पोत्तमानामपि यत्र सिद्धिः ।।३९।।

०००

१. द्र. भगवतः पाणिनेः सूत्राणि ४.४.१६२-१६५

## १.३.अलङ्कारात्मवादिनः (आचार्याः)

आचार्यः काव्यशास्त्रस्य भारते भरतात् परम् ।
काञ्चीवासी बभूवाद्यः श्रीदण्डी वैदिकः कविः ।।४०।।

स आस्तिकश्चकारादावागमाश्रितबुद्धिकः ।
'काव्यलक्षण'संज्ञाकं ग्रन्थं सर्वाङ्गसुन्दरम् ।।४१।।

गुणानामागमे संख्या दश तेनोररीकृता ।
अष्टौ वापि रसानां या परस्तात् परिवर्त्तिता ।।४२।।

श्लेषः, प्रसादः, समता, माधुर्यम्, सुकुमारता ।
अर्थव्यक्ति-रुदारत्वमोजः कान्ति समाधयः ।।ना.शा.दण्डी
शृङ्गार हास्य करुण वीर रौद्र भयानकः ।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृता ।।ना.शा.दण्डी

काव्यलक्षणमप्यस्य तदेवास्ति निजागमे ।
पुराणेऽग्नेर्बभूवादौ वाक्यलक्षणमेव यत् ।।४३।।

अर्थस्येष्टत्वतः सिद्धं काव्यस्यापि प्रयोजनम् ।
वैदिकाश्च वदन्त्येवं शब्दमात्रे हि वेदताम् ।।४४।।

काव्ये 'शब्दः प्रमाणं', तस्यार्थे प्रामाण्यमस्तु वा ।
न वेति तस्य नास्त्येव ग्रहः स्वैरत्वमेदुरः ।।४५।।

योऽर्थः काव्यस्य तस्यास्ति विकल्पात्मा तनुस्ततः ।
सोऽयं वादः शरीरेण विहीनाय निराकृतः ।।४६।।

शब्दप्रधानतावादी दण्डी प्रागप्यलक्ष्यत ।
गद्यं यदुदभूदस्मात् कविवर्यान्महीयसः ।।४७।।

ग्रन्थेऽस्य लक्षणाख्येऽत्र सन्ति काव्यगुणाः दश ।
अतस्त्रिविष्टपाद्येऽपि स एवास्ति प्रतिष्ठितः ।।४८।।

पञ्चाशतस्तु वर्षेभ्यः परं जातस्तु भामहः ।
नितान्तं विप्रकृष्टे हि शारदाख्ये हिमस्थले ।।४९।।

पौर्वापर्यं द्वयोः केचिद् विकल्पन्तेऽनयोर्बुधाः ।
परन्तु पूर्ववर्त्तित्वं वैदिकस्यैव सङ्गतम् ।।५०।।

प्रमाणान्तरमप्यत्र दण्डिनः पूर्ववर्त्तिताम् ।
साधयत्येव, संशुद्धिर्भामहे दण्डिवाक्यगा ।।५१।।

'गतोऽस्तमर्को भातीन्दुरि'त्यादौ दण्डिनो मतम् ।
विरुणद्धि स्फुटं भामहाख्योऽयं सौगतः स्मयी ।।५२।।

सौगतो भामहो, नास्ति प्रतिज्ञायामिहाऽप्रमा ।
'सार्व'शब्दं प्रयुञ्जानः सर्वज्ञाय द्विरत्र सः ।।५३।।

यस्तु सर्वहितः सार्वः स एव प्रतिपद्यते ।
बौद्धस्यैव गुणः सोऽयं वर्णाश्रमविरोधिनः ।।५४।।

वैदिकेषु न वेदानामधिकारोऽस्ति योषिताम् ।
शूद्राणाञ्चाशुचित्वाय प्रथितानां न ते तथा ।।५५।।

ते वैदिकाः, तथा सार्वाः ।

बौद्धेषु पुत्रा जायन्ते पिता किन्तु न मन्यते ।
'पिता मे नास्ति कोऽपी'ति निस्संकोचं वदन्ति ते ।।५६।।

बौद्धा वैनाशिकाः सर्वे रसिकाश्चैव वैदिकाः ।
अलम्भावो रसो वापि नान्यद् ब्रह्मैव केवलम् ।।५७।।

प्रियो भूमैव जीवानां जीवाः बौद्धा अपि स्मृताः ।
निर्वाणात् प्रागमीषां का स्थितिस्ते यदि जीविताः ।।५८।।

यशोधरायामुत्पन्नो राहुलो येन वा पथा ।
प्रशंसन्तोऽपि तं वेदमार्गं निन्दन्ति सौगताः ।।५९।।

तैरेतैः काव्यशास्त्रेऽपि प्रहृतं, भामहेन यत् ।
भरतस्य मुनेर्मार्गोऽलङ्घि द्वैगुण्यवादिना ।।६०।।

दण्डिना स पुनर्वेदमार्गिणाऽरक्षि, वामनः ।
तमेव द्विगुणीकृत्य काव्यात्मत्वमवापयत् ।।६१।।

शतीद्वयमतीत्यासौ भामहो येन टीकितः ।
तेनोद्भटेन नाम्नापि गुणतत्त्वं न पूजितम् ।।६२।।

अलङ्कारत्वजात्यैव गुणत्वमपि पूजितम् ।
व्याप्यजातितया काव्यसारत्वञ्चापि घोषितम् ।।६३।।

तथैव रुद्रटेनापि शतानन्दस्य सूनुना ।
काव्येऽलङ्कारमात्रस्य सद्भावः परिकीर्त्तितः ।।६४।।

रस एतैश्चतुर्भिस्तु काव्यालङ्कारसंज्ञया ।
उदघोषि, न तत्स्वादमात्रं रस इतीरितम् ।।६५।।

०००

## २. तिस्रः क्रान्तयः

### १. प्रथमा क्रान्तिः : ध्वन्यात्मवादः (बौद्धोपज्ञः)

ध्वनिवादोऽन्तरालेऽस्मिन् दशाब्दीनां शते गते ।
नाश्रावि क्वचनाप्यार्येष्वाचार्येष्वेषु षट्स्वपि ।।६६।।

रुद्रटेन समं जातः शारदादेश एव हि ।
आनन्दवर्धनः सूरिर्ध्वनिग्रन्थमटीकत ।।६७।।

ग्रन्थस्य तस्य संज्ञाऽऽसीत् 'काव्यालोक' इति स्वयम् ।
याता सैव परस्तात् तु 'ध्वन्यालोक' इति प्रथाम् ।।६८।।

ध्वनिग्रन्थं यमापत् स स आसीत् 'कारिका'-तनुः ।
आलोकनाम्नी वृत्तिस्तु तत्रानन्देन कल्पिता ।।६९।।

असौ न वैदिकः पूर्णो नासीत् पूर्णश्च सौगतः ।
मार्गेण मध्यमेनासौ प्रावर्त्तत कलाप्रियः ।।७०।।

शब्दं विहाय स्वं ग्रन्थमर्थमात्रत एव सः ।
वितेने तेन तस्यास्य प्रच्छन्ना बौद्धतोदभूत् ।।७१।।

शब्दार्थौ सहितौ काव्यमिति भामहमार्गिणा ।
आनन्देन श्रुतेर्मार्गी दण्डी नैव प्रमाणितः ।।७२।।

अलङ्कारस्य बाह्यत्वमागमापायिताञ्च सः ।
प्राजूघुषदुभे नेत्रे निमील्याभिनवप्रियः ।।७३।।

अलङ्कारा गुणाभिख्याः शोभादय उदाहृताः ।
भरतेनापि तत्रासीदानन्दो नैव दत्तधीः ।।७४।।

नाप्यसौ दत्तधीरासीदागमेऽग्निपुराणगे ।
प्रतीयमानमर्थं य आक्षेपान्तर्गतं जगौ ।।७५।।

अभिधां लक्षणां चासौ मन्वानः कीलितामगात् ।
व्यञ्जनामार्गमत्रापि　　शब्दमाश्रयमब्रवीत् ।।७६।।

येन न्यायेन वृत्ती द्वे असमर्थे व्यभावयत् ।
शब्देऽपि सोऽन्वितस्तत्र तं त्यजत्येष विद्वरः ।।७७।।

चक्षुरुन्मीलनामात्रमाचार्याणां स्वधर्मताम् ।
गमितं तत्र नो तेषां धूलीप्रक्षेपणोचिता ।।७८।।

महामाहेश्वरः श्रीमान् गूढपाद इति स्मृतः ।
शारदादेशगालोकतन्त्रागमविशालदृक् ।।७९।।

गुप्तवंशाङ्कुरः कश्चिन्नृसिंहतनयः सुधीः ।
अन्वगच्छदिमं मार्गं शैवोऽसौ सौगतोऽपि सन् ।।८०।।

सार्वाविमावुभावेव भामहाभिनवौ शिवौ ।
ततश्च बौद्धताप्यत्राऽपाणिग्रहणजाऽपतत् ।।८१।।

जागर्त्ति स्म घृणाऽप्यस्याचार्यस्याऽत्र महीयसः ।
दण्डिनि श्रुतिमार्गीये लोल्लटानुगता-गिरः ।।८२।।

अभिनवभारत्यां रसोत्पत्तिवादे ।

भरतः स्वयमेवासीदुत्पत्तिप्रतिपत्तिकः ।
यतो द्वाविंशतिं वारानुत्पत्तिं प्रयुयोज सः ।।८३।।

तत्राभिनवगुप्तोऽसौ भारत्यां मौनमाश्रितः ।
दृश्यते सङ्गतिं नैव प्रदर्शयति कामपि ।।८४।।

श्रौते पथि परब्रह्मरूपोऽलङ्कार एव हि ।
काव्यात्मतामवाप्यास्ते हारत्वादिसमोऽप्यसौ ।।८५।।

स एव गुणतां धत्ते मृदुरूक्षादिभिः पदैः ।
कवयो यां पृथक्कृत्यालङ्कारेभ्योऽभिजानते ।।८६।।

अन्तरङ्गा अलङ्काराः शोभादय इव स्मृताः ।
गुणा अपि त उच्यन्ते भरतादिमहात्मभिः ।।८७।।

सौभाग्यवत्याः सौभाग्यं किमिति प्रश्न उत्थिते ।
पतिरित्युत्तरेणैव ननान्दा शममेति किम् ।।८८।।

सिद्धमेतेन सर्वेभ्यः प्रधानस्यापि गौणताम् ।
मन्वतेऽवसरे प्राज्ञाः न हठस्तत्र धीमताम् ।।८९।।

भृत्यस्य वरयात्रायामनुगच्छति वृत्तिदः ।
ततो न क्षीयते तस्य महिमा व्यावहारिकः ।।९०।।

एकदा स्वादमात्रस्य रसतां ये ब्रुवन्ति ते ।
अन्यदाऽऽस्वाद्यजातस्य रसतामामनन्त्यहो ।।९१।।

रसश्चेत् काव्यकाये नो वर्त्तते रसिके कथम् ।
सामग्र्या अनुपस्थानात् जायतां, व्यक्तिरस्ति तत् ।।९२।।

तस्यै काव्यस्य धर्मत्वाद् दीयतां नाम किञ्चन ।
गुणो वा प्रोच्यतां कश्चिदलङ्कारोऽथवा स्फुटः ।।९३।।

तृतीयः कोऽपि नास्त्येव काव्यधर्मः, प्रकल्पिते ।
नूतने प्रतियोगित्वमभावस्य निवार्यताम् ।।९४।।

रसाभिव्यञ्जिका यापि सामग्री काव्यकायगा ।
तस्याः संज्ञा रसश्चेत् सोऽलङ्कारात्मैव नापरः ।।९५।।

रसोक्तिरिति भोजस्य तस्यै संज्ञास्ति निश्चिता ।
रसायोक्तिरिति त्वर्थे साऽपि युक्तैव मन्यताम् ।।९६।।

अथवा ध्वनिसंज्ञोऽयमलङ्कारोत्तमोत्तमः ।
अलङ्कारत्वजात्याभिव्याप्यजातिविशेषितः ।।९७।।

आनन्दवर्धनात् पूर्वं काव्यालङ्कारशास्त्रिणः ।
येऽजायन्त न तैरेषा ध्वनिसंज्ञाऽभ्युदीरिता ।।९८।।

तैः सर्वैरैकमत्येन काव्यात्मत्वेऽभ्यषेच्यसौ ।
अलङ्कारो, ध्वनिध्वान्ते व्यलीयन्त न ते समे ।।९९।।



०००

## १.४ ध्वनिविरोधः : अभिधैकवादः

परन्तु ध्वनिरप्येष निकृत्तो द्वादशक्रमैः ।
राजशेखर इत्याद्यैर्बुधैः क्षेमेन्द्र-कुन्तकैः ।।१००।।

तात्पर्यवृत्ति[१]रभिधा[२] [३]लक्षणाऽ[४]नुमिती[५] द्विधा ।
[६]अर्थापत्तिः[७] क्वचित् [८]तन्त्रं [९]समासोक्ताद्यलङ्कृतिः ।
रसस्य कार्यता[१०] भोगो[११] व्यापारान्तरबाधनम्[१२]।।जयरथः

काव्यं मीमांसमानेन राजशेखरसूरिणा ।
'माणिक्यपुञ्जे' संवादभेदे गीर्णो ध्वनिः समः ।।१०१।।

माणिक्यपुञ्जः तुल्यदेहितुल्यस्य संवादस्य सप्तमो भेदः । पृ.८९

काव्यानि कुन्तको राजशेखरस्यानुशीलयन् ।
भामहोदीरिते वक्रमार्गे ध्वनिमजीगिलत् ।।१०२।।

ध्वनिं नाम्नापि नास्प्राक्षीत् कुन्तकस्तस्य लक्षणम् ।
उद्धरन्नपि वाक्योत्थां वक्रोक्तिं पाययंश्च तम् ।।१०३।।

महान् माहेश्वरः श्रीमान् गुप्तपादो यदाऽभवत् ।
तदैव कुन्तको जातो महिमा च महामतिः ।।१०४।।

गुप्तं च कुन्तकं चापि तिरस्कारेण दूषयन् ।
महिमा तु ध्वनिध्वंसे श्रीहर्ष इव विक्रमी ।।१०५।।

जयन्तो न्यायमञ्जर्यां स्मारितो ध्वनिमुज्जगौ ।
अलं कवीनामुत्प्रेक्षाविषये तत्त्वचिन्तनैः ।।१०६।।

क्षेमेन्द्रोऽभिनवादेव साहित्यं समधीतवान् ।
किन्तु ध्वनिं न नाम्नापि स कीर्त्तयति निर्भयः ।।१०७।।

शारदादेशजातानां बुधानां ध्वनिवर्त्मनि ।
एषा कथा महाकालधामजानां कथाप्यसौ ।।१०८।।

धारापुरी महाकालधामनाम्नाभ्यधीयत ।
तत्रासँस्त्रय एवैते धनञ्जयमुखा बुधाः ।।१०९।।

धनञ्जयश्च तद्भ्राता धनिकश्च कवीश्वरः ।
भोजराजस्तृतीयोऽभूत् साहित्याचार्यसत्तमः ।।११०।।

भोजराजकृते शास्त्रे ध्वनिधारा व्यलीयत ।
शोणभद्रस्य धारेव भागीरथ्या महाह्रदे ।।१११।।

सर्वाङ्गसम्पूर्णमभूत् तु शास्त्रं साहित्यसंज्ञां च दधे महार्हाम् ।
सम्प्राप्य भोजं, द्विजराजमेत्य पूर्णं यथा शारदशुक्लपक्षः ।।११२।।

दण्डी निराकृत बुधैर्ध्वनिपक्षलीनै-
बौंद्धश्च भामह उदारतयान्वगामि ।
भोजे त्वदो द्वितयमप्युररीव्यधायि
साम्येन गौरवभरेण च तात्त्विकेन ।।११३।।

रस एव तु काव्यात्मेत्यभिनूतनवागभूत् ।
मान्या धारा-बुधानां च किन्तु भोगपुरस्सरम् ।।११४।।

अत्राभिनवगुप्तस्य रसे या दार्शनी प्रथा ।
साऽप्यनादरपात्रत्वं निन्ये शृङ्गारवादिभिः ।।११५।।

रसोऽभीष्टः, परन्त्वस्य लाभे काव्येषु नेक्ष्यते ।
'असत्या वास्ति सत्या वा सामग्री'-ति विदां वरैः ।।११६।।

मार्गः स एव भोजस्य शृङ्गारत्वं रसत्वतः ।
नेष्यतः, शृङ्गशब्दस्य समुत्थत्वैकदर्शिनः ।।११७।।

औत्सुक्यमाभिमुख्यञ्च करणानां न जायते ।
यावत्, तावद् रसानाञ्च भोगो नैवोपपद्यते ।।११८।।

शृङ्गारो यौगिकः शब्दः पशौ भिन्ने यथा मृगः ।
विशेषे ... रूढिर्योगमार्गनिरोधिनी ।।११९।।

आगमस्यानुरोधेन रूढिरेषा निराकृता ।
तान्त्रिकेष्विव साहित्यागमिकेष्वभ्यमन्यत ।।१२०।।

अलङ्कारमहामार्गे ध्वनिवीथी लघीयसी ।
शृङ्गारवीथी चाप्येषा मिलिता मीलनामगात् ।।१२१।।

कुन्तकस्य तु वक्रोक्तिजीवितत्वकथानके ।
वक्रताह्लादरूपैवालम्भूष्णुत्वफलैव सा ।।१२२।।

अलम्भावमयो भूमभावो भूमानमाश्रिता ।
रसब्रह्मागमीयाऽपि गाथा याथार्थ्यमध्यगात् ।।१२३।।

०००

## १.५ गुणेषु स्वैरित्वम्

ध्वनिमार्गे गुणानां यत् त्रैविध्यं सांख्यवन्मतम् ।
आस्तिकानां ततस्तुष्टं चित्तं हन्त यदृच्छया ।।१२४।।

वामनस्येव वक्रोक्ति-कुन्तकस्यौजसो गतिः ।
कीदृशीति विजिज्ञासौ नास्त्येवोत्तरमुत्तमम् ।।१२५।।

उद्भटो वृत्तिमादृत्य गुणानां व्यञ्जिकां गुणान् ।
अर्थापत्तिमुपाश्रित्य स्वीचक्रे नाभिधां श्रितः ।।१२६।।

रुद्रटे चापि सैवास्ति गतिर्गुणसमर्थने ।
मम्मटोऽदात् परित्यक्तगुणत्यागे समुत्तरम् ।।१२७।।

जयदेवो जगन्नाथो मत्वा वै विंशतिं गुणान् ।
प्रतिवन्दीं समाश्रित्य विपक्षौ वज्रपातत: ।।१२८।।

मध्ये तु कुन्तको मत्वा षड् गुणान् प्रत्ननूतनान् ।
स्वतन्त्रां तद्व्यवस्थां च व्यधाद् वैदग्ध्यसम्मताम् ।।१२९।।

वैशेषिकेऽस्य वर्गे स्युर्माधुर्यं सप्रसादकम् ।
लावण्यमाभिजात्यं च चत्वारोऽमू नवौ क्रमात् ।।१३०।।

अस्यैव सुधियो द्वौ वै गुणौ सामान्यवर्गगौ ।
औचित्यमथ सौभाग्यं, विद्यते षड्गुणी त्वियम् ।।१३१।।



माधुर्यौजःप्रसादेषु गुणद्वितयवादिनौ ।
भामहानुगतौ ह्येवं, वामनः कुन्तकस्तथा ।।१३२।।

आचार्यौ द्वाविमावोजः प्रसादे प्लावनां गतम् ।
मन्येते, भामहश्चास्य लक्षणं विदधाति नो ।।१३३।।

गुणानां मिश्रणं चैषां काव्ये स्वादस्य नूत्नताम् ।
जनयेत्नूनं तेषां वै संख्यानं जातु सम्भवेत् ।।१३४।।

अथवा रसनाभिख्या चर्वणा या मता सताम् ।
क्षीरे सिता-केसरादिप्लावनां सा यथा श्रिता ।।१३५।।

तथैव चर्वणा-भिख्ये दन्तव्यापारणाऽपि नुः ।
स्मृतौ धेया वराकीं तां त्यक्त्वा सर्वे जरद्गवाः ।।१३६।।

रसस्य तु दशा भिन्ना सा समाधिं समाश्रिता ।
शून्या वेद्यान्तरेभ्यस्तु केवलत्वेन तुष्यति ।।१३७।।

सा वै लोकदशा तस्याः पूर्वं यावत् प्रवर्त्तते ।
कलाजातं द्वयोर्मध्ये कालस्तु प्रविलीयते ।।१३८।।

ऐतिह्यं काव्यशास्त्रस्य शतके दशमे त्विमम् ।
संघर्षं स्वदमानं नः प्रमुखे प्रतितिष्ठति ।।१३९।।

योगशास्त्रे समाधिपादे सूत्रम् -'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ।१.९।

विकल्परूपं काव्यं यत् प्रयातं भासमानताम् ।
सर्वे ततोऽस्य संरम्भा गण्यन्ते वै सुधामुचः ।।१४०।।

प्रच्छन्नकामुका ये वै ये वै निगडितान्तराः ।
तेषां स्वीयासु, शास्त्रेषु स्वीयेषु स्यात् पृथग्गतिः ।।१४१।।

कलासु व्यवहारात्मा लोक एव प्रमाणति ।
लोकोत्तरे पथि भ्रान्ताः पृथक् तिष्ठन्तु निर्द्वयाः ।।१४२।।

ध्वनिर्भर्तृहरेः सिद्धः, साध्यः काव्यात्मवादिनाम् ।
साध्यः साधयितुं यत्ने ऽसिद्धेऽसिद्धो हि जायते ।।१४३।।

प्रतीयमानतां सिद्धां मत्वा कुन्तकमार्गिणः ।
'प्रतीयमान'-शब्देन संतुष्यन्तो निभालिताः ।।१४४।।

कर्मण्यकर्मतां तद्वदकर्मणि च कर्मताम् ।
पश्यतां युक्ततां श्रीमान् गीताचार्यो दिदेश नः ।।१४५।।

कुन्तकेऽस्ति गतिः सैव ध्वनिं त्यक्त्वा समं ध्वनिम् ।
निजिगाल स्ववक्रोक्त्या प्रत्याचष्ट च न ध्वनिम् ।।१४६।।

समूहालम्बनज्ञाने तदतद्युग्मपात्रताम् ।
शोधयन्ति पथा येन पन्थाः स ह्येव कुन्तके ।।१४७।।

परस्परस्पर्धितायां चयनं गुणिनां स्थिरम् ।
सुन्दरं जायते चैव भासते च गुणोत्तरम् ।।१४८।।

असावेव कुन्तकस्य सिद्धान्तः ।

गोत्रभेदं विवाहेषु मन्यन्ते वैदिकाः ध्रुवम् ।
तत एव तु शूरॉश्च वीरॉश्च प्राप्नुमः सुतान् ।।१४९।।

नीलकण्ठः कविर्वक्रभावमेतं कवेः कृतौ ।
यानेव शब्दानित्येवं ब्रुवाणः प्रत्यपद्यत ।।१५०।।

यानेव शब्दान् वयमालपामो
यानेव चार्थान् वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः
संवेदयन्ते कवयो यशांसि ।। शिवलीलार्णवे १.१३

वक्रोक्त्यतिशयोक्ती द्वे पर्यायत्वेन मानिते ।
अभिन्नार्थे इमे काव्यं भेदयेते तु लोकतः ।।१५१।।

साक्षात् परम्परातश्च योक्तिस्तत्रास्ति वाक्यता ।
काव्यत्वं तत्र वक्रत्वनिवेशादेव जायते ।।१५२।।

अप्रस्तुतप्रशंसा या सभ्यभाषा तु सा मता ।
व्याजोक्तिरपि तामेव कक्ष्यां निविशतेतराम् ।।१५३।।

पर्यायोक्तादयोऽन्येऽपि वाग्विलासा निवेशिताः ।
स्युरेव सभ्ये भाषाया व्याहारे विमुखोऽत्र कः ।।१५४।।

यदाहं वाचमाविश्य चेष्टां कुर्वे तथा तथा ।
तदा ममैव नृत्यं तत् काव्यमित्यभिधीयते ।।१५५।।
वच्मि तथा तथा ।

स्वलास्यं यत्र नेक्षेऽहं नेक्षेरँस्तत्र मां बुधाः ।
स्वदे संवादमात्रं तु कलानां पर्युपासने ।।१५६।।

महामाहेश्वरो यं च रसं ब्रूते परात्परम् ।
ब्रूतां स तत्र रस्यं किं रस आस्वादतः परः ।।१५७।।
रस आस्वादादिति भरतः ।

नास्वाद्यते विकल्पात्मा स्वप्नस्वादो न वास्तवः ।
ततो हि जागरावस्था विषादाय प्रकल्पते ।।१५८।।

वस्तुवादमधात् पूर्वं काव्यधारा महीयसी ।
महाभारतकाव्यादौ, स्फोटवादे च कल्पिता ।।१५९।।

कुन्तको द्वितयं ह्येतदुदलङ्घयदुच्चकैः ।
स्वकालजेन काव्यस्य निकायेन प्रभावितः ।।१६०।।

एतच्च तेन वक्रोक्ति-नाम्नामेवाभ्यधीयत ।
प्रथमे दैवरक्तत्वं किंशुके ब्रुवता स्फुटम् ।।१६१।।

प्रतिभामात्रसूतानामर्थानां प्रविकल्पयन् ।
प्रामाणिकत्वाभावस्य प्रतियोगित्वमुत्सुकः ।।१६२।।

तृतीयं राजमार्गत्वविशिष्टं मार्गमुज्जगौ ।
काव्यालङ्कारभूषायै गौरवाय बहुक्षमाम् ।।१६३।।

वर्णं पदस्य पूर्वार्द्धमुत्तरार्धं च संहिताम् ।
वाक्यसंज्ञां प्रबन्धं चाऽनुच्छेदैः परिशोभितम् ।।१६४।।
षोढा विभज्य काव्यानां वक्रोक्तिनिकषोपले ।
परीक्षामतनोदुच्चवैदध्यपरिशोभिताम् ।।१६५।।
निदर्शनानि वक्रोक्तेस्तानि तानि युगे स्वके ।
विकीर्णानि समासाद्य ग्रन्थमेतमुपाहरत् ।।१६६।।
सुतो यो वै सरस्वत्या लुप्तो[१] स्वीये तटे स वै ।
कुन्तकस्य कवेः स्वर्णप्रासादे समचीकशत् ।।१६७।।
भवभूतिरनङ्गश्च हर्षः श्रीराजशेखरः ।
त्रय एव त्विमे रत्नावलीकारश्च कुन्तके ।।१६८।।
प्रकाशाधारभूता वै लक्ष्याल्लक्षणमन्थने ।
प्रज्ञामन्थाचलेनात्र प्रसूता रत्नमण्डली ।।१६९।।
काव्यशास्त्रं तदेकैव समर्था भूरिमण्डने ।
प्रौढिम्ना चान्तरङ्गे च द्रढिम्ना च परिप्लुता ।।१७०।।
संस्कृतं देवभाषा नः साहित्यं स्वर्णमन्दरः ।
तस्य गोष्ठ्यां समीचीनश्चमषः कुन्तकः सुधीः ।।१७१।।
आनन्दवर्धनो दीक्षां गृहणीयादिह कुन्तके ।
काव्यशास्त्राय काव्याय किञ्च श्रीराजशेखरे ।।१७२।।
रसस्य डिण्डिमं कामं गुप्तपादः प्रपीडयेत् ।
प्रपां तु तत्कृते दत्तो राजशेखरकुन्तकौ ।।१७३।।
वाच्य एवैकलोऽर्थो ऽस्ति काव्ये नार्थान्तराभिधम् ।
किमप्यस्ति विवक्षा हि पूर्यतेऽन्त्येऽर्थ एव यत् ।।१७४।।
शब्दशक्तिरपस्मारं भजते न कदाचन ।
यद्यस्ति साऽन्तिमं पर्व स्पृष्ट्वैव विरमिष्यति ।।१७५।।

---

१. काव्यमीमांसाया ३ख पृ.१७

विरता मन्यते सा चेदभावप्रतियोगिता ।
मन्यतां तत्र, नास्त्येव नास्त्येवैषेति घोषितैः ।।१७६।।

अर्थान्तरस्य व्रज्यासु भ्रान्ताः काव्यस्य सौरभे ।
कथं स्युर्दीक्षितास्तत्र विनयः प्रथमायते ।।१७७।।

विनिनीषव एते स्युर्जागरूका महाक्रतौ ।
महाकाव्येऽन्यथाभावः सह्यतेऽप्यणुकोऽपि नो ।।१७८।।

ध्वनिवादे ध्वनेः सिद्धिः क्रियेत श्रममेरुभिः ।
मृषात्वे क्लेशलेशोऽपि सिषाधयिषितेऽस्ति किम् ।।१७९।।

व्यापाराणाममीषां तु यदा नासीत् प्रकल्पना ।
तदा स्म क्रियते केनोपायेनान्त्यार्थसंविदा ।।१८०।।

दर्शनैर्ये धृता न्यायास्तैः काव्यार्थपरीक्षणम् ।
कर्त्तुं व्यवसिताः प्राज्ञाः प्रज्ञानादेव पातिताः ।।१८१।।

शब्दार्थशासनज्ञानमात्रेणैव न साध्यते ।
साध्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ।।१८२।।

स्वीयामिमां प्रतिज्ञां किं विस्मृता ध्वनिवादिनः ।
विषं पिबन्ति सौस्थ्यं च काङ्क्षन्त्येते मनीषिणः ।।१८३।।

काव्यं स्वादु च निर्मान्ति स्वदन्ते चापि निष्तुषम् ।
तेषु धन्येषु गण्येतां राजशेखरकुन्तकौ ।।१८४।।

येषां मिलन्ति सन्दर्भास्तद्भिन्ने पद्यपुञ्जके ।
कविः कुन्तक एवास्य धृतिरस्ति गरीयसी ।।१८५।।

अयमस्य विशेषो यन्नासौ प्राकृतभाषितैः ।
सिद्धान्तानात्मनो विज्ञमनःसु स्थापयत्यलम् ।।१८६।।

उदाहरणपद्यानि नैतस्यासन्निजेऽङ्गणे ।
नोपलभ्यानि, लभ्यानि नासन् ध्वनिकृतामिव ।।१८७।।

नाटकोत्तमपूगोऽपि नासीद् दृष्टोऽमुना न वै ।
अप्राप्तादपि तस्माद् यद् प्रोद्धरन् वीक्ष्यते स्थलीः ।।१८८।।

यथा पुष्पदूषिकम् ।

शृङ्गाररसभण्डारकेन्द्रं कश्मीरभूः परम् ।
कुन्तको नहि भोजो नु, भरतो नु, विशृङ्खलः ।।१८९।।

ध्वनिध्वंसेऽणुविस्फोटो भवन्नपि महाकविः ।
श्रीश्रीहर्षो न हि स्वीये दृश्यते नैषधे यमी ।।१९०।।

नैषधे ९.५०, २२.१५१

कुन्तकस्यैष सन्दर्भश्चतुरुन्मेष-गात्रकः ।
परन्तु खण्डितः प्रायस्तृतीयोन्मेषमध्यतः ।।१९१।।

तत्र भाषा विभिन्नेव भासतेंऽशेषु केषुचित् ।
कृत्रिमत्वकुठारेण प्रहृतेव वराङ्गना ।।१९२।।

नासौ प्रकरणं हन्त मालतीमाधवाभिधम् ।
भवभूतिकवेर्वेद विस्मिताः स्मस्ततो वयम् ।।१९३।।

भवभूतिकविश्रेष्ठे श्रद्धावानुत्तरं स्मृतौ ।
दधानोऽपि महाप्राज्ञो मालतीमाधवे न वित् ।।१९४।।

पुष्पदूषितकादंशानुद्धरन्नेष नो दृशम् ।
मालवीं नाग्निमित्रीयामुद्धरँल्लक्ष्यते सुधीः ।।१९५।।

भासस्यापि न वेदासौ नाटकानि महाकविम् ।
नाश्वघोषं स्पृशत्येष कुमारस्योत्तरार्धवत् ।।१९६।।

असौ न विक्रमोर्वश्याश्चतुर्थेऽङ्के बृहत्तराम् ।
वाचनां वेद नैवर्तुसंहारमपि तीक्ष्णधीः ।।१९७।।

कुन्तकस्य तु वक्रोक्तेरारम्भे यत् सूतिद्वयम् ।
न्यषेधि ध्वनिमार्गो हि परस्यास्ति निदर्शनम् ।।१९८।।

स्वमनीषिकयेत्येतत् तत्र लिङ्गायते वचः ।
ध्वनितत्त्वसमीक्षैव स्वपदस्यानुयोगिनी ।।१९९।।

काव्यमार्गे तृतीयश्च पन्था मार्गत्रयीमहान् ।
सुकुमारो विचित्रश्च मध्यमश्चेति कुन्तके ।।२००।।

आनन्दवर्धनस्यैव समकालौ बभूवतुः ।
शिवो रत्नाकरश्चापि नरदेहबृहस्पती ।।२०१।।

आनन्दवर्धनो देवीस्तोत्रचित्रकविर्ध्वनिम् ।
नान्वगादर्जुनस्यापि चरितं स्वं व्यलोपयत् ।।२०२।।

शिवस्वामी यथा रत्नाकरः साक्षाद् बृहस्पतिः ।
हरस्य विजयं चक्रे कफ्फिणाभ्युदयं यथा ।।२०३।।

अनयोश्चित्रबन्धेऽपि सामर्थ्यं विस्मयावहम् ।
प्रजिहीर्षुरिवानन्दश्चित्रवर्त्म न्यषेषिधत् ।।२०४।।

रुद्रटः किन्तु तस्यैव समकालोऽभ्यशिक्षत ।
प्रहेलिकाश्च चित्रं च यमकं चापि यत्नतः ।।२०५।।

बंहिमाऽप्यनयोः स्तुत्यो बन्धे तद्वच्च वक्रिमा ।
तथा यथा न कोऽप्यन्यस्तद्द्वयीसाम्यमूढवान् ।।२०६।।

क्रान्तिकालगतं ह्येतं कलहं काव्यशास्त्रिणाम् ।
कलयामस्त्यजामश्च न काव्ये संस्कृतां गिरम् ।।२०७।।

न चाप्यालोचनामार्गे शास्त्रान्तरखलीनिनः ।
भवामोऽध्वपरिष्कारे जागृमश्च सनातनाः ।।२०८।।

काव्यं जुगुप्समानैश्च काव्ये यच्छास्त्रमादधे ।
तत्र सौरभगन्धोऽपि पूतिदिग्धे क्व लभ्यताम् ।।२०९।।

जुगुप्सा-रण्डागीतानि काव्यानीति, काव्यालापाँश्च वर्जयेदिति ।

०००

## १.६ कुन्तकस्यातिरेकः

कुन्तकस्यापि पश्यामः खेलां तत्त्वस्य चिन्तने ।
रसवत्प्रेयसोर्व्याख्याप्रस्तावे तत्तु दृश्यते ।।२१०।।

'रसवद् वच' इत्युक्ते कान्वसङ्गतिरीक्ष्यते ।
अत्रास्ते मतुबेवान्यः प्रत्ययो नैव दित्सितः ।।२११।।

अनुत्थानहता भिन्नकल्पना विदुषां सताम् ।
इतिहासविरोधोऽपि महापातकमिष्यते ।।२१२।।

तीर्थं सरस्वतीक्षेत्रं तत्र यत् पातकं कृतम् ।
कर्त्तारं निखनत्येतन्मूलखातं महाविषम् ।।२१३।।

मतुबः सदृशत्वार्थे कर्षणा सा त्वनीदृशी ।
गुणत्वकल्पनाऽऽनन्दवर्धनस्य बलात्क्रिया ।।२१४।।

गुणीभूतत्वमीक्ष्येत पार्यन्तिकतमे कथम् ।
रसोऽरसायते दिष्ट्या प्राप्तोऽपार्यन्तिकीं स्थितिम् ।।२१५।।

वस्तुतो रसवत् स्थायी मन्यते पुष्टिमापितः ।
रसतुल्यपरीपाकात् रसतुल्यत्वमागतः ।।२१६।।

रसालङ्कार इत्युक्तौ कर्मधारय-योजना ।
ध्वनिमार्गं समुत्सृज्य क्रियते निखिलैरपि ।।२१७।।

रसवत्त्वमलङ्कारो मन्यतां रस एव सः ।
रसवच्चाभिधीयेत काव्यं काव्यपदं तथा ।।२१८।।

रसालङ्कार इत्येतद् वचो वा प्रोच्यते बुधैः ।
रसवद् वेति नह्येव रसालङ्कारवाचना ।।२१९।।

योऽयं द्वयोः समाश्लेषस्ततो भ्राम्यन्ति ते परम् ।
ये तु मूलं न जानन्ति व्युत्पत्तिं वा समीयसीम् ।।२२०।।

आनन्दवर्धनो नात्र सार्थनामाक्षरः सुधीः ।
कुन्तकश्च प्रवृत्तिं स्वां स्वैरिणीत्वाद् रिरक्षिषन् ।।२२१।।

सामग्री कुन्तकस्याग्रे ध्वनिकाराद् वरीयसी ।
आसीदसावसेविष्ट तां समुन्मील्य वीक्षणे ।।२२२।।

कोषागारस्तु वाग्देव्या राजते भिन्नभूमिकः ।
सर्वासु भूमिकास्वस्या राजन्ते मन्दिराणि च ।।२२३।।

चन्द्रशालासुखं द्वौ हि भुञ्जाते किन्तु, कुन्तकः ।
अवन्तिसुन्दरीजानी राजशेखर एव वा ।।२२४।।

कुन्तकस्यापि पश्यामः संरम्भमिह दुर्गमम् ।
रसवत्प्रेयसोर्व्याख्याप्रस्तावे कल्पनोत्थितम् ।।२२५।।

'रसवद् वच' इत्युक्ते क्वास्त्यलङ्कारशब्दना ।
विभावाद्युत्थिते स्वादे काव्यवाचि रसस्थितिः ।।२२६।।

अन्यथा को नु सम्बन्धो रसैः काव्यस्य, का कथा ।
सरसस्य मतुब्मात्रप्रत्ययार्थं जिहासताम् ।।२२७।।

गुणप्रधानभावोऽपि रसे नैवोपपद्यते ।
पार्यन्तिकत्वयुक्तेऽन्यः कः परः प्रतिभासताम् ।।२२८।।

रसवद् रसतुल्यं यत् प्रापितं पोषमुत्तमम् ।
तस्योक्तिरिति तस्याऽस्य रसाङ्गत्वे क्व दूषणम् ।।२२९।।

रसालङ्कार इत्युक्तौ कर्मधारय-योजनाम् ।
नाद्रियेरन् प्रबुद्धाः का कथा तर्हि विरोधिनाम् ।।२३०।।

श्रीकण्ठात् प्रत्यपद्येतां वैकुण्ठपरमेष्ठिनौ ।
साहित्यविद्यां यां सा तु श्रीकण्ठेनैव पूर्यताम् ।।२३१।।

राजशेखर-नाम्नासौ श्रीकण्ठेनैव शाश्वतीम् ।
प्रतिष्ठां 'काव्यमीमांसा'-रूपेण समुपेयुषी ।।२३२।।

मीमांसा-नाम्नि वेदाङ्गे निविश्य गणनामगात् ।
चतुर्दशसु विद्यासु मीमांसेयं कविप्रिया ।।२३३।।

काव्यं द्विधापि पद्यं च गद्यं चेति व्यलीयत ।
ऋक्षु च्छन्दोमयीष्वेवं यजुःषु श्लिष्टकोटिषु ।।२३४।।

श्लिष्टत्वं प्रश्लिष्टत्वं गद्यात्मकमित्यर्थः ।

एवं काव्यमपि प्राप विद्यास्थानेषु सुस्थितिम् ।
प्रापदङ्गित्वमेतत्तु शास्त्राण्यङ्गत्वमेव हि ।।२३५।।
धन्यामिमामाचकलञ् निगमानुचरीं पुरा ।
अलं ब्रह्माभिधामात्मभावेनाऽऽगमयन्त च ।।२३६।।

आगमयन्त आगमत्वेनार्चयन् ।

अलमेव समाम्नातं मायाऽरम्भावसान-कृत् ।
वागारम्भेषु बीजं वै पदार्थेष्वेषु शाब्दिकाः ।।२३७।।

अलं वारणार्थे ।

अलमेवाहमित्यस्ति हकारत्वेन लश्रुतेः ।
प्रत्याहारे त्वहं वास्तामलं वास्तां न भिन्नता ।।२३८।।

अइउण् -हल्' इत्यपौरुषेये वर्णसमाम्नाये ।

अहं वा प्रथमं वाच्यमलं वा कारयोगतः ।
प्राप्नुवाते ह्यहङ्कारमलङ्कारमुत स्वतः ।।२३९।।
अहमलमिति वाच्ये वाचके चापि तैस्तैः
शिवशिवतमरूपैर्वर्तनां प्राप्नुवाने ।
न खलु किमपि वस्तु त्यज्यते स्पर्शयोगं
भजति च जनुषस्तच्चारितार्थ्यं महार्हम् ।।२४०।।

वर्णाः पदानि वाक्यानि वाच्यानि च चतुर्दिशम् ।
व्याप्तानि प्रतिभा तेषु निधत्तेऽलङ्क्रियारसम् ।।२४१।।

किंशुकाः पुष्पिता येन दृष्टास्तत्प्रतिभा शतम् ।
विकल्पान् प्रस्तुतानद्य श्वश्च हन्त करोति हि ।।२४२।।

एते ह्येव विकल्पा ज्ञैः काव्यत्वेनाद्रियन्तकि ।
तेषां नास्त्यन्तिमा संख्या राधाकृष्णौ श्रिताविमान् ।।२४३।।

प्रातिभं किं शुकं, भूयाद् बहिः शिशिरभर्जितम् ।
किन्तु, वासन्तमेव स्यात् वैभवं सर्वदा श्रितम् ।।२४४।।

सौरभेयीष्वपि प्रज्ञाक्षितिजे स्तन्यवर्षिता ।
द्रक्ष्यते पात्रकं किन्तु भविष्यति न पूरितम् ।।२४५।।

किं जातं, प्रातिभं क्षेत्रं प्रविष्टाः स्मो, न यत्र नः ।
याचनां वीक्षते दाता, ददात्येवाधिकं तु सः ।।२४६।।

इदमक्षरशः सत्यमुद्‌गारशतकं यतः ।
माता सरस्वती रूढा प्रतिभां सा न सीमिता ।।२४७।।

राजशेखर- माणिक्यपुञ्जमेतं प्रयाचताम् ।
सत्यं माणिक्यपुञ्जं नः स एष प्रभविष्यति ।।२४८।।

उत्तरोत्तरमास्ते यत् प्रामाण्यं मुनिषु स्थितिः ।
इयमेव ति साहित्यशास्त्रेऽस्मिन् दृश्यतेतराम् ।।२४९।।

यदवादि कवीन्द्रेण राजशेखर-सूरिणा ।
तदेवादाय वक्रोक्तिं वर्धयामास कुन्तकः ।।२५०।।

क्षेमेन्द्रः कुन्तकस्योक्ति-मौचित्येनाऽगतार्थयत् ।
द्वात्रिंशतं सप्तविंशैर्भेदैः संभेदयन् सुधीः ।।२५१।।

व्यासदासाभिधः सोऽयं कथां क्षेमेन्द्र उज्जगे ।
इममेव बभूवास्य शास्त्रस्य क्षेम इत्यतः ।।२५२।।

## २. द्वितीया क्रान्तिः : शब्दशक्तिवादः

यावत् क्षेमेन्द्रमभवत् क्षेमः साहित्यशास्त्रिणाम् ।
शब्दशक्तिजलौकाभिः पश्चादेतेऽभिचूषिताः ।।२५३।।

एकाऽभिधा, परा भक्तिर्व्यक्तिरन्या समास्त्विमाः ।
मृषात्मानो हि निखिलाः किन्तु मायाः, दुरत्ययाः ।।२५४।।

मीमांसायाः कृपा सेयं वेदेऽपौरुषता-गिरः ।
वेदशब्दैः स्वयं स्वीया अर्थाः शक्त्या प्रकाशिताः ।।२५५।।

लौकिकेष्वपि शब्देषु शक्तिरर्थाय कल्पिता ।
कल्पितापि सती सेयं सुरसामुखतां ययौ ।।२५६।।

प्रवर्धमानात्यर्थं सा सूर्याचन्द्रौ न्यजीगिलत् ।
सूर्यो बुद्धिर्मनश्चन्द्रस्तावेतौ शब्दशक्तये ।।२५७।।

बलीकृतौ सुमेधोभिरपि न्यायविभूतिभिः ।
सेयं झञ्झा समान् काव्यशास्त्रिणोऽपि व्यकम्पयत् ।।२५८।।

विपदो यदि जायन्ते जायन्ते शमिता अपि ।
किन्तु साहित्यशास्त्रस्य विपदेषाऽस्थिरायत ।।२५९।।

सैषाऽस्माभिः परित्याज्या सर्वथेति निरूपिता ।
किन्तु ग्रन्थास्तु पूर्वेषामेव यान्ति समादरम् ।।२६०।।

यदि शब्दस्य देहे स्याच्छक्तिः सूर्ये प्रकाशवत् ।
ततो विश्वस्य भाषापि भवेदेकैव केवलम् ।।२६१।।

साहित्यशास्त्रे निस्त्रीका यमिनोऽभिनवादयः ।
आचार्यत्वमुपप्राप्ता अभ्यनन्दन् रसं परम् ।।२६२।।

रससिद्धिः कथं वा स्यादिति सर्वे समुत्सुकाः ।
विवादग्रसिताः सर्वे जाता यक्ष्मणि पातिताः ।।२६३।।

स्वाद्ये वस्तुनि रत्यादौ स्वादेऽपि च रसत्वधीः ।
एषामतो रसो जातो वात्यापत्त्राग्रजो हठात् ।।२६४।।

काव्ये नास्ति रसः स्वादरूपः, स्वाद्यश्च पाठके ।
अभाव उभयत्रास्य स्वस्याभावममूर्च्छयत् ।।२६५।।

स्वप्ने दृष्टो यथा जाग्रदवस्थायां न विद्यते ।
जागरे लक्षितोऽर्थश्च स्वप्ने नैवाभिलक्ष्यते ।।२६६।।

अतो निष्कृष्यते 'नास्ति भावो नास्त्येव' दर्शनैः ।
रसवादस्तमेवाप्तः सङ्कटं ध्वनिवर्त्मनि ।।२६७।।

यदि काव्ये रसव्यक्तिक्षमामादाय नृत्यते ।
तथा तथा कथं नैतामलङ्कारं प्रचक्षते ।।२६८।।

रसोक्तिरिति भोजाद्यैरुररीक्रियतेतराम् ।
रसायोक्तिरिति व्याख्यां दत्त्वा ते सुखमासते ।।२६९।।

व्यञ्जकत्वं ध्वनिं वापि मत्वाऽलङ्कारमुत्तमम् ।
प्रसीदन्तु विवादानामशनिभ्यः सुरक्षिताः ।।२७०।।

ब्रह्मीभावं रसस्येव मत्वालंभावमेव च ।
तदभिन्नाभेदधिया रसालङ्कारगाऽप्यभित् ।।२७१।।

अत एव पुराचीनाः पञ्चाप्याचार्यसत्तमाः ।
रसत्वस्याभ्यमन्यन्तालङ्कारे व्याप्यजातिताम् ।।२७२।।

श्रुत्वैवैतत् पुराणानामागमानामिदं वचः ।
बौद्धा यथा ध्वनिभ्रान्ताः याताः सर्वेऽपि वैमुखीम् ।।२७३।।

अलं ब्रह्म रसो ब्रह्म रसालङ्कारयोर्युगम् ।
ब्रह्मैवेत्यागमः श्रौतो बौद्धैरेतैस्तिरस्कृतः ।।२७४।।

पारमाणवयुद्धे नु विवादेऽस्मिन् सचेतसः ।
क्षेमेन्द्रावधि नो पात-घात-खेदमबीभजन् ।।२७५।।

तामिमां काव्यविद्यां नो नव्यन्यायोऽप्यखेदयत् ।
कथामितः परं सन्तो द्रष्टारो गुच्छकेषु नः ।।२७६।।

लब्धस्य रक्षणं क्षेमस्तत्रेन्द्रत्वयथार्थताम् ।
बिभर्त्ति व्यासतुल्योऽपि व्यासदासो हि केवलः ।।२७७।।

कुन्तकस्यानुजः किन्तु गतोऽग्रजधुरं गुणैः ।
पुण्यैश्चापि सरस्वत्या मन्त्रस्याराधनोदितैः ।।२७८।।

या वै शास्त्रक्रिया या च काव्यशास्त्रक्रिया तयोः ।
सव्यसाचित्वसिद्धोऽभूत् क्षेमेन्द्रो राजशेखरः ।।२७९।।

प्रकाशेन्द्रस्य पुत्रोऽयं गङ्गकस्य च शिष्यकः ।
साहित्यविद्याशिष्यश्चाभीनवस्य विशालदृक् ।।२८०।।

क्षेमेन्द्रो व्यास एवासीद् बाहुविध्येन कौति यः ।
यथा माहेश्वरः श्रीमान् नारसिंहिः स गूढपात् ।।२८१।।

काव्यस्य सर्जने दक्षो युगं स्वं प्रत्यबिम्बयत् ।
श्रीमानभिनवाचार्यो भरतो नु यदृच्छया ।।२८२।।

अपश्यत् कं गुणं सोऽयं महाधीर्ध्वनिनामनि ।
तृणच्छन्ने महाकूपपाताले पातनामयात् ।।२८३।।

उरगस्य द्विजिह्वत्वं जिह्मत्वमिव विश्रुतम् ।
प्राड्विवाकायितं तेन विसृज्याचार्यपादताम् ।।२८४।।

अत एवाभिजातोऽपि भक्तिभागपि शिक्षितः ।
क्षेमेन्द्रोऽभिनवं काव्यशास्त्रवर्त्मनि नाऽन्वगात् ।।२८५।।

प्रतीयमानतामर्थे पश्यन्नपि न तत्कृते ।
कल्पितं भ्रामकं चापि ध्वनिनाम समस्पृशत् ।।२८६।।

बुद्धावदान-मतयोर्विहितं युगं यत्
काव्यस्य तेन कविनाऽस्ति ततः प्रकाशः ।
प्रेमा युगस्य कवितास्वपि निर्मितासु
योषित्सु यौवनभरेण नु दीपितासु ।।२८७।।

अत्रैव बौद्धावदानलतिका, मुनिमतमीमांसा च पौनःपुन्येनोदाहृतपद्या ।

अनन्तराजस्य (१०२८-६३ई०) बभूव राज्ये
योऽध्यैष्ट साहित्यमथाभिनूत्नात् (अभिनवात्) ।
'प्रकाश'पुत्रः[३] स निरन्तरायं (प्रकाशः प्रकाशेन्द्रः ।)
क्षेमेन्द्र आराधयदार्यवाणीम् ।।२८८।।

पश्यन्तु धीरा ध्यानेन शास्त्रमेतन्न दूषितम् ।
शब्दशक्ति-समाख्येन विकल्पेन सुचेतसाम् ।।२८९।।

अक्षरं परमं ब्रह्म सनातनमलं विभुम् ।
वेदान्तेषु वदन्त्येकं चैतन्यज्योतिरीश्वरम् ।।२९०।।

अग्निपुराणे ३३९.१

०००

इतः परं न शब्दस्य, तच्छक्तेरेव मुख्यता ।
शक्तिद्वैतस्य त्रेतायाः शक्तेर्वा शब्दसंश्रितेः ।।२९१।।

भट्टश्रीमुकुलस्तत्र स्वतन्त्रं ग्रन्थमादधे ।
दशत्वमभिधावृत्तेर्वृत्तेषु प्रत्यपादयत् ।।२९२।।

जात्यादिषु चतुर्ष्वस्य वृत्तिर्मुख्याऽभिधा ततः ।
षड्विधत्वमितैषैव लक्षणेति विभाविता ।।२९३।।

दशाप्येतेऽभिधावृत्तनाम्नैवैकेन भाषिताः ।
अर्थान् दशविधान् वीक्ष्य लोके सर्वान् समाहरन् ।।२९४।।

लक्ष्यतो लक्षणं स्प्रष्टुं बुद्धियात्रेयमीदृशी ।
प्रतियोगित्वमर्थेऽत्र शब्दे चाऽप्यनुयोगिता ।।२९५।।

प्रमाणपदवीमत्र शब्दशक्तिद्वयं दधे ।
आनन्दवर्धनोपज्ञा व्यञ्जना तु तिरस्कृता ।।२९६।।

आनन्दवर्धनो धीमान् मिष्टवाक् कारिकास्तु ताः ।
आलोकयदभूद् यासां प्रारम्भो ह्यर्थमात्रतः ।।२९७।।

'अर्थः सहृदयश्लाघ्यः काव्य'-मित्यभिधानवान् ।
प्रतीयमानस्यार्थस्य शाब्दत्वे पृष्ठधीरभूत् ।।२९८।।

स्वैरत्वदोषदिग्धोऽपि व्यरंस्त न मृषात्मनः ।
व्यञ्जनायाः समाश्लेषात् सौन्दर्येण खिलीकृतः ।।२९९।।

एषा तु साम्प्रतं यावत् क्लेशयत्येव सन्मतीन् ।
वैदिकस्य गृहे दूरं प्रविष्टेव सुराङ्गना ।।३००।।

श्वभ्रपातं, समेऽप्यन्ये परं जाता मनीषिणः ।
अन्वभूवन्, महामाहेश्वरो गुप्तस्त्वभूत् सुखी ।।३०१।।

झञ्झायां शब्दशक्तीनामस्यां हन्त समे द्रुमाः ।
क्षतविक्षतगात्राश्च काव्यान्निर्विविदुश्च ते ।।३०२।।

क्व तदानीन्तना एव रत्नाकरसमाः शिवाः ।
पुंभावमापिता देवा इव काव्यसुमेरवः ।।३०३।।

क्व च धिक्कारणा तेषामानन्देन सयुज्वना ।
आचार्यपदवी त्वत्र व्यलज्जत महीयसी ।।३०४।।

सारस्वतः प्रवाहः स एष संवर्धमानो नः ।
परम्पराया रक्षां कुर्वन् संलक्ष्यतेऽवहितः ।।३०५।।

यमेवौचित्यमादद्रे कुन्तको गुणमुत्तमम् ।
तमेवानन्दतः प्राप्तं व्यासदासः समाददे ।।३०६।।

ध्वनिं निरस्यतोर्यौ वै मार्गौ संवादवक्रते ।
तत्रैवौचित्यशब्देन व्यासदासः समाददे ।।३०७।।

द्वात्रिंशतः प्रकारान् यान् राजशेखर ऊचिवान् ।
सप्तविंशाँश्च तत्रैव भेदानायोजयत् त्वसौ ।।३०८।।

एकोनषष्टिं भेदान् वै सम्यगभ्यस्यतः कवेः ।
निरर्गलं गिरां धात्री/माता जिह्वायां नृत्यमृच्छति ।।३०९।।

सिद्धः सारस्वतो मन्त्रो यस्य क्षेमेन्द्र एव सः ।
प्रमाणं यो ध्वनिं हित्वाप्यस्ति विद्वत्सु संमतः ।।३१०।।

राजशेखर-संज्ञस्य कविराजस्य सत्तमः ।
प्रतिच्छन्दोऽभवद् व्यासदासः क्षेमेन्द्रसंज्ञकः ।।३११।।

श्रीप्रकाशेन्द्र-पुत्रोऽसौ शिष्यः श्रीगङ्गकस्य च ।
लेखनीं निदधे पाणौ काव्यानि प्रकटानि च ।।३१२।।

एष सामाजिकेष्वस्ति रन्ध्रेषु प्रहरन् कविः ।
समयाम्बिकया वेश्याः कलाश्चापि विलासगाः ।।३१३।।

समयाम्बिका=समयमातृका, कलाश्चापि विलासगाः=कलाविलासे ग्रन्थे

सम्यक्चित्रितवृत्तान्ताः प्रकटीकुरुतेऽभयः ।
ब्रह्महत्यादिपापानां पाचने दत्तचित्तकः ।।३१४।।

अलं ब्रह्म रसो ब्रह्म रसालङ्कारयोर्युगी ।
ब्रह्मैवेत्यागमो दिष्ट्या क्षेमेन्द्रेणापि नेक्षितः ।।३१५।।

अस्मिन् विवादे विध्वंसि-शस्त्रयुद्धे नु पण्डिताः ।
क्षेमेन्द्रावधि नो पातघातक्लेशमबीभजन् ।।३१६।।

सेयं साहित्य-तच्छास्त्र-क्रान्ति-पञ्चक-संकथा ।
यां हि सोढ्वापि विद्वांसो विरक्ता न यदृच्छया ।।३१७।।

शास्त्रान्तरप्रवृत्तीनामुपश्लेषमहोत्सवः ।
प्रच्छन्नश्च प्रकाशश्च विकाराय व्यजृम्भत ।।३१८।।

गङ्गायां घोष इत्यादौ लक्ष्यलक्षकयोर्मिथः ।
ताटस्थ्यमस्त्यभेदो वा निर्णयोऽत्र सुदुष्करः ।।३१९।।

महद्भिरपि विद्वद्भिर्भ्रान्तमत्र भिदां स्थितौ ।
आरोपाध्यवसानादिपरीभाषासु कुण्ठितैः ।।३२०।।

काव्यप्रकाशो दुर्भेद्यं गतः सन्तमसं ततः ।
पूर्वापरमनालोच्य व्याख्यातुं प्रसृता अपि ।।३२१।।

प्रदीपकारस्तं ह्येतं निगरीतुमिवोद्यतः ।
मोघवृत्तिस्तु सञ्जातः प्रस्थानानां विभेदतः ।।३२२।।

अध्येतारस्त्विमान् ग्रन्थीन् भेत्तुमुत्कन्धरा अपि ।
विडम्बन-महासिन्धोस्तरङ्गैर्दूरमाहताः ।।३२३।।

विषयान्तरतो जाता अपरक्ता अमी बुधाः ।
कालसर्पपरीवर्त्तान् प्रति चामीलितेक्षणाः ।।३२४।।

कवित्वशक्तिमन्तोऽपि काव्यं द्रब्धुमनुत्सुकाः ।
इमे श्मशानचैत्यस्य रक्षणायोद्यता इव ।।३२५।।

गद्यपद्योभयालेखचातुरीवञ्चिताः समे ।
संस्कृतव्याकृतेरेव पालनेन फलान्विताः ।।३२६।।

एवमाकुलयामास शब्दशक्तिविभावरी ।
सम्पूर्णमेव साहित्यं पण्डितानां कृतात्मनाम् ।।३२७।।

'विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
तयोरन्योन्यसंबन्ध' इति सत्यं व्यलुप्यत ।।३२८।।

यदि शब्दस्य देहे स्याच्छक्तिः सूर्ये प्रकाशवत् ।
तदा विश्वस्य भाषापि भवेदेकैव केवला ।।३२९।।

काव्यालङ्कारकारिकायां कारिका ११२.

तर्क एष सहस्राब्दीद्वितयेऽप्यन्वचिन्ति नो ।
समतोषि च तत्ताभिः शब्दब्रह्मादिबुद्धिभिः ।।३३०।।

सेयं संक्रान्तिकालानां क्रान्तिगाथाऽद्य जायते ।
नूतनत्वं गता सेयं विश्वस्मै प्रतिपाद्यते ।।३३१।।

तामिमां क्रान्तिगाथां नः संस्कृतस्थां मनीषिणः ।
समासामपि भाषाणामाद्रियेरन् शुंभावहाम् ।।३३२।।

काव्यं वाक्यात्मकत्वे हि काव्यं भवति नान्यथा ।
ततो मीमांसकानां हि विधिनाऽत्र विचार्यते ।।३३३।।

विटानां वणिजां चैव वाक्यानि पृथगेव हि ।
तत्र तात्पर्यभूतं यत् तैर्हि तत् प्रविभाव्यते ।।३३४।।

लोकस्यैव प्रमाणत्वं भरतेनाऽत्र रूप्यते ।
वेद-प्रामाण्य-मन्यत्राऽनुजत्वेनोररीकृतम् ।।३३५।।

लोको वेदस्ततथाध्यात्म्य प्रमाणं त्रिविधं स्मृतम् (नाट्यशास्त्रे २५.१०९शि सं.)
अत्र वेदस्य लोकानुजत्वं स्पष्टम् ।

इङ्गिताकारचेष्टाभिः काकुभिश्च विधीयते ।
लोकस्यैव सहायत्वं तदपि स्वत एव हि ।।३३६।।

अलौकिक्या श्रियाप्यन्ये निरूप्यन्तेऽभिधित्सिताः ।
विना शब्दं विना शक्तिं सङ्केतेन विनाभिधाम् ।।३३७।।

नैते काव्यस्य धर्मत्वं प्रपद्यन्ते यथा तथा ।
व्यङ्ग्यार्थव्यञ्जितार्थाश्च तद्व्यङ्ग्याश्चापि सम्मताः ।।३३८।।

अत एव महामान्यो महिमाचार्य ऊचिवान् ।
व्यङ्ग्यार्थव्यङ्ग्यभूतानामर्थानां त्याज्यतां दृढम् ।।३३९।।

व्यक्तिविवेके ।

येऽर्था अर्थात् प्रतीयन्ते धूमाद् वह्निर्यथा न ते ।
शाब्दीं प्रतीतिरेखां नः खण्डितुं शक्नुयुः बुधाः ।।३४०।।

रात्रौ भुञ्जानता पीने दिवाऽविहितभोजने ।
शब्दसीमानमप्राप्तेरर्थापत्तिस्नुषीकृता ।।३४१।।

नाट्याङ्गानां त्रयाणामप्यस्ति नो काव्यता यथा ।
वाचिकाभिनयस्याङ्गीक्रियते काव्यरूपता ।।३४२।।

अतएवाभिधामेकामेव चुम्बति वृत्तिता ।
शब्दस्य, तत्र व्यक्त्याद्या गण्यन्ते न कवेः कृतौ ।।३४३।।

इति बहुविधा शक्तिः शब्दे मुधैव विभाव्यते
पुरुषमहिलाजन्मन्येषैव दिक् तत इष्यताम् ।
श्रयति जननीकुक्षौ धातुं सुतं जनकस्तु यां
न तु तदितरां काञ्चिद् धातुं सुतां सृतिमृच्छति ।।३४४।।

साहित्यशास्त्रमुपशीलयितुं महद्भिः
कुक्षिर्दिवोऽपि मित एव विभाव्यते चेत् ।
तद् युक्तमेव, परिवर्धत एव सोऽयं
यावद् विमर्शविषयीक्रियते सुधीभिः ।।३४५।।

तामिमां क्रान्तिगाथां नः संस्कृतस्थां मनीषिणः ।
समासामपि भाषाणामाद्रियेरन् शुभावहाम् ।।३४६।।

३.धाराधाम (महाकालधाम)

यज्ञवह्नेर्य उद्भूतः पुमान् स प्रत्यपीपदत् ।
मारयित्वा परान् धेनुं वसिष्ठाय महर्षये ।।३४७।।

तस्य वीर्यार्जिता जाता *परमार* इति श्रुतिः ।
वंशे तस्य क्रमाज्जातः सुतः श्रीहर्षसीयकः[१] ।।३४८।।

राष्ट्रकूटांश्च हूणांश्च जित्वा श्रीहर्षसीयकः ।
धर्म्यं स्वं परमाराख्यं भुवि राज्यमतिष्ठिपत्[२] ।।३४९।।

मुञ्ज-भोजौ

श्रीहर्षसीयकस्यास्तां पुत्रौ द्वौ मुञ्ज-सिन्धुलौ ।
उत्पलप्रभृतीन्यासन् मुञ्जे नामान्तराण्यपि ।।३५०।।

नेत्र-चन्द्र-ख-सोमेऽब्दे[३] विक्रमस्याऽभवन्नृपः ।
मुञ्जराजः पराजेष्ट त्रिपुर्यां युवराजकम् ।।३५१।।

---

आधाराः-क.प्राचीन भारत का इतिहास : डॉ रमाशंकर त्रिपाठी १९६५
ख.अत्रैव २१.७८, सरस्वतीकण्ठाभरणालङ्कारः ५.४१८-
वासिष्ठैः सुकृतोद्भवाध्वरशतैरस्त्यग्निकुण्डोद्भवो
भूपालः परमार इत्यधिपतिः सप्ताब्धिकाञ्चेर्भुवः ।
अद्याप्यद्भुतहर्षगद्गदगिरो गायन्ति यस्योद्भटं
विश्वामित्रजयोर्ज्जितस्य भुजयोर्विस्फूर्जितं गुर्जराः ।।
ग. नवसाहसाङ्कचरितमहाकाव्यम् ११.४९-६८
घ. एपिग्राफिया इंडिका भाग-२ उदयपुरप्रशस्तिः

श्लोकः १. विश्वामित्रो वसिष्ठादहरद् बलतो यत्र (अर्बुदाचले) गां तत्प्रभावा-
ज्जज्ञे वीरोऽग्निकुण्डाद् रिपुबलनिधनं यश्चकार एकः एव ।।
२. मारयित्वा परान् धेनुमानिन्ये स ततो मुनिः ।
उवाच परमाराख्यः पार्थिवेन्द्रो भविष्यसी ।। ति ।
३. १०१३ विसं, ई० सन् ९५६ मुञ्जस्य राज्याधिरोहणकालः ।

लाटांस्तथा च कर्णाटाञ् चोलांश्चापि सकेरलान् ।
पराजित्य पराजिग्ये वारान् षट् तैलपानपि ।।३५२।।
आ कैलाशमुदीच्यां तु दक्षिणे मलयावधि ।
शशास भुवमेकाकी कदाचिन्मुञ्जवाक्पतिः ।।३५३।।
तस्यैव शासने जातो धनिकः सधनञ्जयः ।
यन्मुखे नर्नृतीति स्म संस्कृताख्या सरस्वती ।।३५४।।
अजुष्टपूर्वामासाद्य श्लक्ष्णतां यस्य भारती ।
उमा माहेश्वरी यद्वदनन्यसदृशी ह्यभूत् ।।३५५।।
आनन्दवर्द्धनो यं हि ध्वनिं काव्यात्मसंज्ञया ।
भावयामास तं यस्तु तात्पर्येण न्यजीगिलत् ।।३५६।।
मुञ्जस्य शस्त्रशास्त्रार्थ-सव्यसाचि-कवीशितुः ।
अनुजः सिन्धुराजोऽस्य भोजाख्यं पुत्रमाप्तवान् ।।३५७।।
बाल्य एव तु भोजस्य वाक्पतित्वं यथार्थयन् ।
पिता विहाय देहं स्वं दिवं प्राप यदृच्छया ।।३५८।।
मुञ्जराजः शशासाऽथ समाः काश्चिदथो ददौ ।
भोजाय भ्रातुरादेशाद् राज्यं सौराज्यबन्धुरम् ।।३५९।।
सप्तमे तैलपैः सार्धं जायमाने मृधे त्वभूत् ।
निगृहीतो मुञ्जराजो मोचितश्च शरीरतः ।।३६०।।
भोजो मुञ्जवधक्रूराञ्जित्वा शत्रून् मुहुर्मुहुः।
चालुक्याऽऽहवमल्लात् तु राज्यलक्ष्मीमहापयत् ।।३६१।।
धारामाहवमल्लस्तु जर्जरां, निर्धनां, कृशाम् ।
कृत्वाऽमुष्णात् तदीयां श्रीसम्पदं कणशोऽरिवत् ।।३६२।।
भीमोऽपि गुर्जराधीशो धारां भोजस्य नाशयन् ।
अमुष्णादस्य कोषं तु कणशः क्रूरनिश्चयः ।।३६३।।

अभ्यमुष्णाच्च साहित्यरत्नाकरमिह स्थितम् ।
ग्रन्थशश्च चकारैतं रक्षितं पट्टने पुरे ।।३६४।।
भोजात् परं पदं त्वस्य लेभे कश्चिज् जयाभिधः ।
ततश्चोदयसिंहाख्यः सूनुर्भोजस्य वीर्यवान् ।।३६५।।
अलावुद्दीनखिल्जी तं विनाश्य स्वयमासदत् ।
शासनं तस्य वंशोऽसौ समाप्तिमगमत् ततः ।।३६६।।
राजा भोजोऽपि षड्भार्यः शरीरे कामसोदरः ।
युधिष्ठिरोऽप्यभूद् द्रव्यव्यये दाने च तत्तथा ।।३६७।।
ऐतिह्ये भारतस्यास्य त्रय एव महीभुजः ।
समुन्नतालिका हर्षभोजरुद्राह्वयाः परम्[१] ।।३६८।।
त्रयाणामपि चैतेषां नियतिर्हन्त कीदृशी ।
कीदृशी च सरस्वत्या रक्षा, धिङ् मानुषं जनुः ।।३६९।।

साहित्यकल्पः

साहित्यशास्त्रे साहित्यकल्पाऽऽरम्भप्रजापतिः ।
भोज एव स एवैकः साहित्याचार्यसत्तमः ।।३७०।।
पूर्णतागुणकल्पौ च लक्षणालङ्कृती तथा ।
साहित्यमिति कल्पानां प्रस्थतापि प्रकल्प्यते ।।३७१।।
प्रस्थान्यपि च भूयांसि दिक्षु सर्वासु जाग्रति ।
आप्रालेयगिरेः पूर्वपश्चदक्षिणगानि वै ।।३७२।।
कान्यकुब्जादनन्ताख्यपुरं यावद् बहून्यपि ।
दृश्यन्ते गुर्जरेष्वेवं प्रस्थान्यान्ध्रादिभूमिषु ।।३७३।।
प्रस्थकल्पयुगीयुक्तः कल्पः साहित्य-संज्ञकः ।
भोजोपज्ञः स साहित्यमीमांसासंपरिष्कृतः ।।३७४।।

१. हर्षो हर्षवर्धनः, भोजो भोजराजः, रुद्रश्च प्रतापरुद्रदेवो वारङ्गलाधिपः ।
२. अनन्तपुरम् तिरुवनन्तपुरम Trivandrum.

व्युत्पादयन्ते साहित्यं प्राचीनाश्चापि भूरिशः ।
अर्थानुसारिणीं वाचं सेवमानाः सनातनाः ।।३७५।।

'साहित्यविद्या'-संज्ञाया दाता यायावरोत्तमः ।
अङ्गप्रत्यङ्गकल्पानामपि सम्यक् प्रकल्पनः ।।३७६।।

सारस्वतेयः काव्याख्यः सुन्दरः पूरुषस्तु ताम् ।
साहित्यविद्यामौमेयीं वत्सगुल्मे व्यवीवहत् ।।३७७।।

सम्बन्धिन्यौ मिथस्तस्मात् कालादेते बभूवतुः ।
शारदा चैव शैलाधिराजपुत्री च पार्वती ।।३७८।।

सम्बन्धिनावजायेतां पितामहमहेश्वरौ ।
विवाहयज्ञ एताभ्यामन्वस्थीयत वत्सयोः ।।३७९।।

मार्दङ्गिको विवाहेऽस्मिन् महागणपतिः स्वकाम् ।
शुण्डां व्यापारयामास पुष्करे रावपण्डिताम् ।।३८०।।

चामुण्डा भैरवश्चैव प्रहर्षपरमावुभौ ।
नर्त्तनं प्रीतिशृङ्गारं कल्पयामासतुर्मुदा ।।३८१।।

नारदस्तुम्बुरुश्चैव वैणिकौ वैणिकै रवैः ।
दिवं चापि नभश्चापि पूरयामासतुर्दृढम् ।।३८२।।

पीताम्बरधरः श्यामः सिन्धुशायी महाहरिः ।
महेन्द्राद्यैः समं जातो जन्यो गुरुरथो गुरुः ।।३८३।।

प्रारम्भोऽस्य विवाहस्य जातो यस्मिन् मुहूर्त्तके ।
पर्यवस्यति नारम्भो नित्यमेव प्रवृत्तिभाक् ।।३८४।।

अनयोः कौतुकागाररसलीला हि दर्पणान् ।
कवीन्द्रामन्तरात्माख्यानधिशेतेऽधुनापि वै ।।३८५।।

कुमारावश्विनीजातौ रसायनविशारदौ ।
विवाहेऽत्र समायातान् भोजयेते पुनः पुनः ।।३८६।।

विनाङ्कुरं विना काण्डं विना शाखां विना दलम् ।
तत्राफलन्त पक्वानि फलान्येव हि शाखिनः ।।३८७।।
समे कालाश्च देशाश्च समे जाताः परस्परम् ।
संप्लुतिं प्राप्य निष्पत्तौ रसानां क्षमतामिताः ।।३८८।।
ब्रह्मापि निर्गुणं साक्षात् प्रकृतिं त्रिगुणीतनुम् ।
पिस्पृक्षत्येव विश्वेषु दर्शनेषु मिषत्स्वपि ।।३८९।।
वयं मृषोद्यगात्राणि भवामो दर्शनान्यपि ।
नास्ति हानिः कवित्वं तु दर्शनत्वं प्रपत्स्यते ।।३९०।।
राजशेखरसाहित्यविद्यासारस्वतेययोः ।
द्वन्द्वाँस्तु कुन्तकोऽस्प्राक्षीदन्यूनानतिरिक्तकान् ।।३९१।।
वागौमेयीधुरं सर्वाप्यश्नुवीतेति भाषया ।
अर्थे सारस्वतेयात्मन्यपि सैव कथा स्थिता ।।३९२।।
साहित्यं प्रथमं यायावरीये दर्शने स्थितम् ।
द्वितीयं कुन्तके पश्चात् तृतीयं विश्वनाथके ।।३९३।।
विश्वनाथस्य साहित्ये काव्यनाट्य-युगी-सरित् ।
तृतीया जायते सा हि दृश्यरूपा सरस्वती ।।३९४।।
माम्मटे दर्शने नाट्यं नास्ति, काव्यं तथा मुनौ ।
धनञ्जयादि-विद्वत्सु नैव कार्त्स्न्येन लक्ष्यते ।।३९५।।
मुञ्जगोष्ठीगरिष्ठेषु धनिकादिषु तु द्वयम् ।
दृश्यते लक्षितं धैर्यात् सौक्ष्म्याद् दार्शनिकात् पथः ।।३९६।।
भोजे धारापतौ व्यश्नुवाने साहित्यदर्शने ।
सामग्र्येण गता सात्म्यं शाब्दा मीमांसका यथा ।।३९७।।
तदिदं यच्च साहित्यं तत् तु सागरसन्निभम् ।
निम्नगानां शती प्राप्तशतरूपा व्यलीयत ।।३९८।।

अनुशासनजातानि मिलितानि स वै पृथक् ।
प्रयागस्तीर्थराजत्वेऽप्यषेचि निखिलैरपि ।।३९९।।
इदं साहित्य-शब्दस्य दर्शनं नः पुरातनैः ।
लेखैरेव प्रकाशं वै लब्धमित्यत्र नोच्यते ।।४००।।

भोजे द्वादशसम्बन्धसाहित्यात्म तु दर्शनम् ।
अशोधि पण्डितैः पश्चात् भागद्वयविधायिभिः ।।४०१।।

तत्र यः प्रथमो भागः सोऽष्टाभिःप्रथमैर्मतः ।
अन्त्यैश्चतुर्भिः काव्यत्वविधायिभिरिति स्थितौ ।।४०२।।

अमुं हि कविचन्द्रोऽपि चन्द्रिकायां चमत्कृतेः ।
उद्धरॅल्लक्ष्यते सोऽयं, ध्वनिवादे खपुष्पति ।।४०३।।

अस्माभिस्तु कृतौ वर्गौ तत्राद्ये नवविग्रहे ।
दोषाभावोऽपि शास्त्राद्येष्वपि संमन्यते यतः ।।४०४।।

भाषासामान्यतां सूते सेयमाद्या नवान्वयी ।
भागे तस्मिंश्च सम्पन्ने कवित्वमितरा त्रयी ।।४०५।।

साहित्यस्यागमः सोऽयं धामकल्पतया मतः ।
धाम्नि सर्वे विकल्पा वै सर्वस्मिन् दधतेऽस्मिताम् ।।४०६।।

कल्पे समयसीमाऽपि क्रोडीक्रियत एव हि ।
सृष्टिचक्रमिदं पूर्णमेव चित्ते विवर्त्तते ।।४०७।।

असत्यमपि सत्येन गर्भितं ह्यत्र भासते ।
अभावस्यापि भावत्वं विना का प्रतिपादना ।।४०८।।

अभावस्यापि भावश्चेद् विद्यते काऽन्तभावता ।
अभावाभावतां त्वेते मन्महे क्रीडितं विदाम् ।।४०९।।

पाशितो ह्यपि सद्दामोऽपाशितस्तर्हि मन्यताम् ।
यद्दिवा पाशबन्धस्य त्रिकालासत्यतोच्यताम् ।।४१०।।

श्राद्धं येषां तु कुर्मस्तान् प्रेता इति न मन्वताम् ।
जीवितानां कथं श्राद्धं मृतानामिव धर्मतु ।।४११।।
असतामपि साहित्यं सतामिव विभाव्यते ।
सतामपि च तन्नैवासतामिव नटादिषु ।।४१२।।

## शृङ्गारप्रकाश-कथा

भोजः शास्त्रं मुनीन्द्रस्य भरतस्य पुनर्नवम् ।
चिकीर्षन् संव्यधाद् ग्रन्थं साहित्यस्य प्रकाशकम् ।।४१३।।
अध्यायानां तु षट्त्रिंशीं रक्षन् षट्त्रिंशतां श्रितः ।
शृङ्गारात्मा प्रकाशो वै नाट्यशास्त्रं हि नूतनम् ।।४१४।।
नाम यस्यास्ति साहित्यप्रकाश इति वस्तुतः ।
तात्पर्यात् किन्तु शृङ्गारप्रकाश इति यं विदुः ।।४१५।।
सर्वेषामिन्द्रियाणां तु वेगाः शृङ्गमिति श्रुताः ।
ऋच्छन्ति स्वं चिदानन्दमिति शृङ्गारसंज्ञकाः ।।४१६।।
शृङ्गारस्यास्य यादृग् वै प्रकाशो दृश्यतेऽत्र सः ।
साहित्यशास्त्रे कुत्रापि नान्यत्र खलु दृश्यते ।।४१७।।
साहित्यस्य कृते सत्यं विश्वकोष इतीर्यते ।
ग्रन्थो महानसौ दैवादरक्ष्यत तु केरले ।।४१८।।
अस्य संपादने जाता दाक्षिणात्या धृतोद्यमाः ।
तेषु द्वौ स्वामिनावार्य्यौ कुप्पूसम्पदिति श्रुतौ ।।४१९।।
सम्पत्कुमारस्वामी श्रीजोशेरसहयोगतः ।
प्राकाशयदिमं ग्रन्थमष्टपञ्चाशताऽब्दकैः ।।४२०।।
तत्रात्र मूललेखस्य प्रतिच्छाया निरन्तरा ।
अनिश्चयं पदच्छेदविकल्पेष्वस्ति बिभ्रती ।।४२१।।
कुप्पूस्वाम्यपि मूलस्य प्रतिलेखमकारयत् ।
पञ्जिकाभिस्तु दाश्वांस्ता राघवाय सुमेधसे ।। ४२२।।

असौ जग्रन्थ तद्भावानाङ्ग्ल्या वाचा स्वतन्त्रतः ।
प्रादान्मूलं तु संशोध्य हार्वर्डाय यथातथम् ।।४२३।।

सप्तत्रिंशत् समा भुक्त्वा प्रकाशान् स चतुर्दश ।
प्राकाशयददत्वा तु पाण्डुग्रन्थादि-संस्तवम् ।।४२४।।

संस्कृतप्राकृतश्लोकसप्तसाहस्त्रिकां क्रमात् ।
नोत्सहेते प्रदातुं वै परिशेषेऽपि ताविमौ ।।४२५।।

पश्चात् शुद्धं तु यत् पद्यं तस्य पूर्वमुपागते ।
खण्डितेऽन्तरमाप्ते वा लेखे नास्त्येतयोस्तु दृक् ।।४२६।।

खण्डितान्यपि पद्यानि मुद्रितेभ्यो न कोष्ठके ।
अपूरयेतां तेभ्यस्तु बुधावेतौ कथञ्चन ।।४२७।।

एकस्या एव गाथाया भिन्नपाठोद्धृतावपि ।
भूयो भूयः, प्रतीकं हि दत्त्वा तुष्यति राघवः ।।४२८।।

टिप्पन्यां लिख्यते तेन 'सर्वत्राशुद्धिरि'त्यथो ।
न दीयते स्वशुद्धस्य मूलं याऽक्षरसंहतिः ।। ४२९।।

'अबद्धमि'ति टिप्पन्यां दीयतेऽनेन यत् पदम् ।
कोऽर्थस्तस्येति न ज्ञातुं शक्यतेऽध्यवसायिभिः ।।४३०।।

लिलेखिषति टीकां स्म राघवार्यः स चिक्लिशे ।
भृशं तत्याज पश्चात्तु क्लेशमेतं पराहतः ।।४३१।।

पञ्चपञ्चाशता वर्षैर्भृशमुत्तप्य राघवः ।
जगज्जागरयामास भोजायेति कृती हि सः ।।४३२।।

अपराधस्तु यस्यात्र स स्वयं भोजभूपतिः ।
युद्धं चक्रे, न रक्षां तु ग्रन्थानामीदृशां सुधीः ।।४३३।।

अरक्षिताः क्व जीवन्ति कलाकोषाः परात्पराः ।
अथापि रक्षिता ये वै तत्र हेतुः कृपा प्रभोः ।।४३४।।

मलावारेषु शृङ्गारप्रकाशो रक्षितो यतः ।
भारताख्यो गिरां देव्या रङ्गस्तत्रास्ति कारणम् ।।४३५।।

अथ साहित्यशास्त्रस्य समग्रस्यात्र दर्शनम् ।
वितानेन समग्रेण सहाऽत्रैव हि लभ्यते ।।४३६।।

ध्वनिवादिषु चित्तस्य पिब्दता याऽभिलक्ष्यते ।
ततोऽप्यदूषितात्मैष भोजग्रन्थः प्रकाशते ।।४३७।।

एतां विज्ञापनां कृत्वा कामयेऽत्र विदां वराः ।
आवर्जयेयुर्दृष्टिं स्वां ताटस्थ्यैककलेवराम् ।।४३८।।

ये सिद्धाः सिद्धि-संपन्नास्ते सर्वे मान्यसत्तमाः ।
किन्तु क्षेत्रे स्वकीये हि नान्यत्रेति स्थितेः स्थितौ ।। ४३९।।

रस एव परः काव्य इति या गुप्तदेशना ।
भोजेऽपि सैव साम्राज्ञी शृङ्गारस्त्वस्य वै रसः ।।४४०।।

अन्ये ये काव्यधर्मास्ते यथागममवस्थिताः ।
भोजेऽपि, ध्वनिमार्गे हि तेषां स्थितिरनीदृशी ।।४४१।।

आगमो रक्षितो येन पुराणेन तदादरः ।
कथं न क्रियते गुप्तैरानन्दैश्चापि भोजवत् ।।४४२।।

आग्नेयं हि पुराणं तद् यत्र ध्वनिरपि स्मृतः ।
किन्त्वाक्षेपाद्यलङ्कारनामान्तरतयैव तु ।।४४३।।

गुणप्रधानभावो यः काव्यधर्मेषु साध्यते ।
तत्र प्रमाणं नान्यत्तु त्यक्त्वैकां भोक्तृसंविदम् ।।४४४।।

परिभाषाविवादेन कश्मलाऽस्ति तु यस्य धीः ।
तत्त्वदर्शिषु विद्वत्सु तस्य नाचार्यतोचिता ।।४४५।।

अतस्तु संस्कृतं त्यक्त्वा प्राकृतानि वचांस्यपि ।
काव्यत्वेन समैरेभिराचार्यैः सत्कृतानि हि ।।४४६।।

प्राकृतशुद्धिः

भोजः प्राकृतकाव्यानि सुबहूनि व्यरीरचत् ।
संस्कृतोत्तमकाव्यानि यथैव विधृतादरः ।।४४७।।
आनन्दवर्धनेनापि देवीशतकवत् स्वयम् ।
प्राकृतस्यैव काव्यस्य रचना विहिता पुरा[1]।।४४८।।
यदत्र प्राकृतं तस्य राघवः परिशोधनम् ।
आकाङ्क्षति स्म यत्साह्यात् तस्य ग्रन्थत एव तत् ।।४४९।।
व्यधाय्यत्र, महादेवकुलकर्णि-विनिर्मितात् ।
सा हि संकल्पसंसिद्धी राघवस्य महात्मनः ।।४५०।।
भायाणीति महान् विद्वानपभ्रंशस्य तेन वै ।
यदशोधि तदप्यत्र साहायकमचीकरत् ।।४५१।।
अन्यैरपि कृतं विद्वद्वरैः प्राकृतशोधनम् ।
उज्जयिन्यां परं तत्तु तत्रत्यैरेव भक्षितम् ।।४५२।।
नमस्क्रियन्ते सर्वेऽमी विद्वांसः शिरसा मया ।
सनातनेन श्रीरेवाप्रसादेन कृतज्ञुना ।।४५३।।
कुप्पुस्वामी महाचार्यो यस्य शिष्योऽभवत् सुधीः ।
राघवस्तस्य सन्मित्रमिङ्गल्स इति विश्रुतः।।४५४।।
सम्पत्कुमारो जोशेरश्चेतीमान् विदुषो हृदा ।
स्मरामि सादरं भोजशृङ्गारैतिह्य-विस्तरे ।।४५५।।
दण्ड्यासीद् वैदिकः किन्तु सौगतेषु स हि प्रियः ।
त्रैविष्टपेयैर्बौद्धैस्तु स एवाद्याऽनुशील्यते ।।४५६।।
भामहे नाऽस्त्यबौद्धानां बौद्धे सत्यपि नादरः ।
यत्राऽस्ति तु विसंवादस्तत्रैतौ स्वस्वमार्गगौ ।।४५७।।

प्रज्ञां ये तितऊं कृत्वा प्रवर्त्तन्ते मनीषिणः ।
अनादरमतिस्तेषु परेष्वपि न जायते ।।४५८।।

शास्त्रस्यास्याऽऽगमो नाम्नाऽहङ्कारागम उच्यते ।
अहङ्कारेऽप्यहंतत्त्वमेव तत्त्वायते परम् ।।४५९।।

अग्निपुराणस्योऽन्तिमेऽध्याये ३८२-६१

भावाः सर्वे परीवारो नाभिरेका तु चित्कला ।
अहं-तत्त्वे सदेहस्य नान्यत् किमपि शिष्यते ।।४६०।।

आगमग्रन्थ आद्योऽस्य शास्त्रस्याग्नेयसंहिता ।
भोजराजस्य वंशोऽपि प्रोच्यतेऽग्निभवः स्फुटम् ।।४६१।।

शृङ्गाररसमूर्धाऽसौ महाग्रन्थोऽभिधीयते ।
अहमागमकायास्मै नमः साहित्यवर्त्मने ।।४६२।।

वन्दे मार्तण्डपिण्डं वै द्वादशात्मतया स्थितम् ।
वन्दे साहित्यशास्त्रं च द्वादशात्मतया स्थितम् ।।४६३।।

तृतीयं तु महाकालधाम धारा-प्रतिष्ठितम् ।
काव्यनिर्णयकर्तासीद् धनिको यत्र सत्कविः।।४६४।।

दशरूपककर्तापि विष्णुपुत्रो धनञ्जयः ।
तत्रैवासीन्महाप्राज्ञमुञ्जराजसभाकविः ।।४६५।।

अत्रैव श्रीमहाराजो भोजराजश्च निर्ममे ।
साहित्यकौस्तुभाम्भोधिं सनातनमहानिधिम् ।४६६।।

चतुर्थं धाम वै काशी 'विश्वेश्वर'-विहारभूः ।
अप्पय्यदीक्षितः श्रीमानत्र धाम्नि व्यराजत ।।४६७।।

मीमांसाशास्त्रवाक्यानां प्रकारो येन लम्भितः ।
साहित्यशास्त्रे यं श्रित्वा पण्डितेन्द्रो व्यजृम्भत ।।४६८।।

पण्डितेन्द्रो जगन्नाथो दिल्लीविजयकीर्त्तितः ।
अत्रैवासीत् क्वचिन्नाम रसगङ्गाधरप्रसूः ।। ४६९।।

अद्वैतसिद्धिकारश्च भक्तिमार्गस्य देशिकः ।
मधुसूदनभिक्षुश्च काशीमेव व्यभूषयत् ।।४७०।।

ब्रह्मत्वं दृष्टवान् वै योऽलङ्कारे स सनातनः ।
साहित्यशास्त्रवित् काशीधामशोभायतेऽधुना ।।४७१।।

संस्कृतं सम्यगभ्यस्य पतञ्जलिदिशा तु याम् ।
रचनां कुर्वते प्राज्ञा ध्वनिवादेन सा हता ।।४७२।।

रत्नाकरः शिवस्वामी श्रीहर्षश्चेति शिश्रियुः ।
यां वाचं साऽद्य यावद् वै निधिर्भारतवर्षिणाम् ।।४७३।।

अभीद्धं यत् तपस्तस्य फलं सा कविवेधसाम् ।
तस्मात् पराजिता ये तु तेभ्योऽपि स्वस्ति केवलम्[1] ।।४७४।।

आनन्दवर्धनशतानि, सहस्रकाणि
गुप्तस्य, मम्मट इति प्रथितस्य कोटिम् ।
भोजप्रकाश उपदीकुरुते समग्रं
साहित्यशास्त्रमिह नश्वरमा प्रतिष्ठा ।।४७५।।

नास्त्यस्य दण्डिनि द्वेषः प्रीतिः कापि च भामहे ।
तत्त्वग्राही स्वयंद्रष्टा महानाचार्य एषकः ।।४७६।।

साहित्याकादमी-कालिदास-संपादनाध्वरे ।
राघवाचार्यकार्यस्य पूर्त्तिं यत् कृतवानहम् ।।४७७।।[2]

तत एव सरस्वत्या राघवस्याऽध्वरान्तरे ।
अहमेव नियुक्तोऽस्मि लम्भितादद्भुतसाह्यकः ।।४७८।।[3]

तदप्येतन्महत् कार्यं पूरयित्वाऽस्मि निर्वृतः ।
मन्यमानोऽवशिष्टस्य संपूर्त्तिं शक्यसंभवाम् ।।४७९।।

---

१. 'अभीद्धं तपः' ऋग्वेदे १०.१९.१ ।
२. ऋतुसंहार-रघुवंशयोः संपादनरूपस्य कार्यस्य ।
३. अद्भुतमेवेदं यद् हार्वर्डनिपादितस्य ग्रन्थांशस्य लाभः ।

कालिदासस्य संपूर्णं साहित्यं स्वस्थविग्रहम् ।
कृत्वाऽकरोद् गुरोरस्य नाट्यशास्त्रं च तादृशम् ।।४८०।।
साम्प्रतं तस्य शास्त्रस्य महतो विग्रहान्तरम् ।
कृतिमेतां च शृङ्गारप्रकाशं संव्यशोधयम् ।। ४८१।।

यश्च हेमाद्रिभट्टस्य दर्पणं रघुवंशगम् ।
संपाद्य सम्यग् विश्वस्मा इदंप्रथमतो ददौ ।।४८२।।
साहित्यशास्त्रगं हत्वा तमोऽदाद् यत् तु तेजसे ।
वकाशं, तत् स्वसूत्रं यः कालकुक्षावधात् कृती ।।४८३।।
महाकाव्यत्रयी-कर्त्ता 'श्रीवाण्या' समलङ्कृतः ।
सहस्राणि नव श्लोकान् निर्मायाऽद्यतने युगे ।।४८४।।
साहित्यशास्त्रसद्गात्रे मेरुदण्डोत्तमायितः ।
आङ्ग्ल्या वाचाऽपि तत्सारं प्रकाशय्य कृतक्रियः ।।४८५।।

काश्यां 'महादेव'-बुधेन्द्रवर्य-
'महेश्वराचार्यवर'-स्य शिष्यः।
रेवाप्रसादोऽस्मि शरद्द्वयेन
संपाद्य शृङ्गारमिमं प्रसन्नः।। ४८६।।

काव्ये प्रकाशो[1] यदि वा प्रकाशो
भावे[2] रसे वेति विभावनायाम् ।
प्रकाशशृङ्गारमिमं[3] स्तुवानो
भोजोऽपि नूनं परमार[4] एव ।।४८७।।

०००

---

१. काव्यप्रकाशो मम्मटस्य ।
२. भावप्रकाशः शारदातनयस्य ।
३. शृङ्गारप्रकाशो भोजदेवस्य ।
४. अस्यैव सन्दर्भस्य ३४८ पद्यटिप्पण्यां पृ. ३६ ।

## ३. तृतीया क्रान्तिः : विकल्पवादः

साहित्यञ्चाप्यलङ्कारश्चाप्यनर्थान्तरं तयोः ।
भूमैवैको द्वयोर्वाच्यस्तात्पर्यार्थश्च तत्तथा ।।४८८।।

दोषाभावो गुणो द्वेधालङ्कारश्चेति सम्पदा ।
रसादयोऽखिला धर्मा गृहीताः निरवग्रहम् ।।४८९।।

विकल्पा एव शब्दार्थजाता काव्यं भवन्ति तत् ।
न शक्तिकल्पना शब्दे क्रान्तावत्रावशिष्यते ।।४९०।।

साहित्यं प्रक्रियारूपं फलरूपञ्च दृश्यते ।
भोजप्रस्थे तथैवान्यो वामनप्रस्थ ईक्ष्यते ।।४९१।।

रसो विशेषणं तस्य विशेष्यं च शमादिकम् ।
काव्यनिष्ठैर्विभावाद्यैः करणै रस्यते तु तत् ।।४९२।।

सामग्रीयं काव्यकायनिष्ठाऽलङ्कार उच्यते ।
व्याहृता च तथैवाद्यैराचार्यैः सकलैरपि ।।४९३।।

युक्तोऽनया काव्यकायो रसवानिति भाषितः ।
रसवत्त्वं रसाद् भिन्नं नेति काव्यरसायते ।।४९४।।

राजादिरपि भृत्यस्य विवाहेऽनुगतायते ।
पार्यन्तिको रसः स्वादो यदि भोक्तरि स स्थितः ।।४९५।।

रामे श्यामत्वमारोप्य नृत्यतां तद्वदेव च ।
श्यामे रामत्वमारोप्य शाखामृगतया स्थितिः ।।४९६।।

गजस्येव निमीलेयमन्धश्रद्धाऽथवा विदाम् ।
साहित्यशास्त्रे प्रज्ञाया वाद एकोऽभिनन्द्यते ।।४९७।।

प्रज्ञावादेऽपि बौद्धत्वं पृथगेवाऽसदाग्रहः ।
पुत्रोऽहं किन्तु नो कश्चित् पिता मेऽस्तीति बौद्धता ।।४९८।।

माता पूज्येति तत्प्रोक्तः पिता प्राज्ञे पिता मतः ।
हठमात्रेण साहित्ये प्रस्थातुं शक्यते क्षणम् ।।४९९।।

क्षीरं क्षीरं परस्तात् तु नीरं नीरं च जायते ।
रसेऽलङ्कारता युक्तालङ्कारे रसता तथा ।।५००।।

स्वादमात्रासु भिन्नासु स्वादे किं भिन्नतेष्यते ।
सा स्वाद्ये संभवत्येवं स्वाद्याऽलङ्कृतिरस्त्यपि ।।५०१।।

एकमात्रस्य पक्षस्तु गृह्यते न महात्मभिः ।
प्रतियोग्नुयोगित्वे विपरीते अपि स्थिते ।।५०२।।

किन्तु ध्वनिसुरां पीत्वा मत्ताः कश्मीरभूबुधाः ।
बौद्धानन्वसरञ्जाताः किञ्च स्वस्यैव घातकाः ।।५०३।।

एको ध्वनिः, परश्चास्मै व्यापारो व्यञ्जनात्मकः ।
तस्य नष्टेऽपि शब्दस्य शरीरे कल्पनेति धीः ।।५०४।।

येषां ते तु ध्वनिध्वान्ते सचक्षुष्का अपि स्वके ।
युगे शिष्यैर्महाप्राज्ञैर्धिक्क्रियां जोषमापिताः ।।५०५।।

शब्दशक्तिर्महामाया जाता हन्त ततः परम् ।
महाविताना सुरसाजृम्भेव मुखगह्वरे ।।५०६।।

अस्या एव महादेव्या लक्षणाशीतिता फलम् ।
विश्वनाथस्य साहित्यदर्पणे पर्यजृम्भत ।।५०७।।

काव्यप्रकाशटीकासु प्रदीपादिकृतो बुधाः ।
व्यामोहं भेदवीथीषु लक्ष्यन्ते गमिता इति ।।५०८।।

साम्प्रतं किन्तु शब्दानां कायमुत्सृज्य पण्डिताः ।
सङ्केताश्रितशक्तित्वं ज्ञानरूपं समाश्रिताः ।।५०९।।

शब्दज्ञानानुपाती यो विकल्पोऽर्थस्य विद्यते ।
वस्तुशून्यस्य, संकेतस्तयोरेवेति निश्चये ॥५१०॥

यदि शब्दस्य देहे स्याच्छक्तिः सूर्ये प्रकाशवत् ।
तदा विश्वस्य भाषापि भवेदेकैव केवला ॥५११॥

शब्दशक्तिमहागर्त्तादन्धकूपादिवोद्धृताः ।
मोदामहे महाकालमहाकुक्षेरिवोद्धृताः ॥५१२॥

काव्यालङ्कारसंज्ञाया ब्रह्मार्थत्वागमेन तु ।
तृतीया क्रान्तिरुत्पन्ना काव्यशास्त्रे परात्परे ॥५१३॥

गुणप्रधानभावश्च सापेक्षो ह्यवसीयते ।
प्राधान्ये स्वगुणे[1] लब्ध्वा स्वप्रधाने[2] तु शेषता ॥५१४॥

सहयोगे ततस्तस्य प्रधानत्वं न हीयते[3] ।
एषा वाक्यपदीयस्य प्रतिपत्तिरिह प्रमा ॥५१५॥

काव्यालङ्कारसंज्ञाया ब्रह्मार्थत्वप्रकाशिका ।
कारिका या बहोः कालात् पुरा प्राकाशि तत्र नः ॥५१६॥

भूयस्यः कारिका विज्ञैर्द्रष्टुं शक्यन्त इत्यसौ ।
नीयते पूर्त्तिमत्रैव विषयोऽसौ सनातनैः ॥५१७॥

सुस्थे संघटिते चापि विग्रहेऽद्यान्तरात्मना ।
सुदुर्बलो द्विपाज्जन्तुरेषा विश्वस्य निर्ऋतिः ॥५१८॥

रक्तबीजस्वसारं तामिमां सूर्पणखासखीम् ।
प्रकाशात्मात्मशृङ्गारश्चिकित्सेत यदि प्रभुः ॥५१९॥

---

१. प्राधान्यं स्वगुणे लब्ध्वा प्रधाने पाति शेषताम् । इति तु मुद्रणा पूना सं. १९२५ ।
२. अप्रधाने । ३. (बा.प.सा.स.शेषा.१६२)

स्वस्ति प्रजाभ्यः परिपालयद्भ्यः
स्वस्ति स्वरूपेभ्य इव प्रियेभ्यः ।
स्वस्त्यस्तु कामेषु सनातनीये-
ष्वाचारवत्स्वाचरितव्यवित्सु ।।५२०।।

अलङ्कारो भूत्यै श्रवणसमकालं प्रभवति
प्रभावाद् वाच्यानामभिहिततयोपस्थितिजुषाम् ।
रसो वा भावो [1]वा श्रयति गमकत्वं तदनु तु
स्पृशत्यन्तस्तत्त्वं यदिपरमभावे तु विफलः ।।५२१।।

क्रिया वा कालो वा न खलु विविधां काञ्चन दधा-
त्यथो तत्तच्छक्तेर्बहुविधतया याति बहुताम् ।
तथा स्वात्मैवाऽसौ रस इति सदैवैकलतया-
व्यवस्थाता भावैर्विविधविविधैर्भाति विविधः ।।५२२।।

क्रियानिर्वृत्यन्ते बत किमवशिष्टं भवति तद्
विवेक्तव्यं, भोक्ता, किमु तदपरं स्वां चितिमृते ।
अवस्थां स्वामेव प्रथयति कला काव्यवपुषा
प्रयाता भाव्यत्वं सुमनसि शरद्वारिविशदे ।।५२३।।

'अलं-भावो ह्यलङ्कारः'
स च सौन्दर्यतत्कृतोः ।
विभक्तात्मा विभुर्जीव-
ब्रह्मणोश्चिद्घनो यथा ।।

काव्यालङ्कारकारिका २८

०००

---

१. अलङ्कार एव रसत्वं भावत्वं वा प्राप्य गमकत्वं व्रजति, गमकत्वं चान्तस्तत्त्वस्पर्शः। स च समाधिः । तत्रैव रसः ।

(३)

## कवितादर्शनम्

काव्यं वाग्, वाक् परं ब्रह्म, ब्रह्म ब्राह्मी सरस्वती ।
सा वीणाधारिणी सा हि नीलकण्ठासना शिवा ।।५२४।।

शिवो ब्रह्म, शिवा ब्राह्मी, तौ च ते च शिवाशिवौ ।
तावलङ्कार ओङ्कारकल्पोऽहङ्कारसञ्चितः ।।५२५।।

रसो भरत, आस्ते स कल्पद्रुम-वने सुखम् ।
पुत्रैः शताधिकैः पुत्रीशतैश्च परिवारितः ।।५२६।।

भरतो लोक एषोऽत्र त्रेधा, तत्र च भूरियम् ।
आश्रयः सुकुमारीणां कुमारीणां मुनिस्तु ताः ।।५२७।।

सुतैर्युयोजिषन् नाकादुपयाति महीतलम् ।
प्रतिप्रयाति दृष्ट्वाऽत्र पौत्राऽऽस्यकमलाकरम् ।।५२८।।

एषामन्तः प्रसूतेऽसौ नाट्यप्रज्ञां रसात्मिकाम् ।
धर्मार्थकाममोक्षाणां देशिकां सर्वमङ्गलाम् ।।५२९।।

गुप्तभावेन तामेतां नूत्नसंस्कारवञ्जुलाम् ।
व्याख्यात्यभिनवो नूत्नो भट्टनायकविग्रहः ।।५३०।।

सोऽयं महेश्वरः साक्षात् सर्वशास्त्रविदग्रणीः ।
टीकते भारतीनाम्न्या टीकया करुणाकरः ।।५३१।।

नाट्यवेदाभिधं नाट्यशास्त्रमेतद् भुवस्तले ।
आदधाति परिक्रम्य परिक्रम्य युगान्तरम् ।।५३२।।

गोविन्दचन्द्रपाण्डेयो विश्वशास्त्रविशारदः ।
अनुध्याय कलानां वै रहस्यमिदमुज्ज्वलम् ।।५३३।।

सनातनमिमं मां तु नियुयोज समादरात् ।
नाट्यशास्त्रपरिष्कारानुवादचयनाध्वरे ।।५३४।।

एषोऽहं व्यापृतस्त्वत्र बोधाऽबोधयुगेक्षया ।
यन्न वेद्मि परित्यज्य तं तमंशं यदृच्छया ।।५३५।।

यदशक्यत संस्प्रष्टुं तदेवैकं परिस्पृशन् ।
अन्यत्राऽज्ञानतः पादचारदुस्साहसं त्यजन् ।।५३६।।

नाट्यशास्त्रं सुमेरुर्नः कलास्रोतांसि निर्झरन् ।
यस्यैकदेशः साहित्यशास्त्रं नः परमद्भुतम् ।।५३७।।

असर्वज्ञः परिच्छेत्तुं कार्त्स्न्येनैतत् तु कः क्षमः ।
निजेऽञ्जलौ यदम्भस्तन्मात्रोपस्थानतत्परः ।।५३८।।

यदशक्यत वै कर्त्तुं तदकारि, ततः परम् ।
परेभ्योऽत्याजि नाशिक्षा शिक्षणाय प्रगल्भते ।।५३९।।

मार्गोऽस्वाभाविको नो नः सांसिद्धिकतयाऽऽगतः ।
पदभङ्गः प्रसूते वै पङ्गुत्वमिह बौद्धिकः ।।५४०।।

भाषा नैकाक्षरः कोषः प्रतीकः स परं विदाम् ।
ललाटे वरवर्णिन्या स हि कोऽपि विशेषकः ।।५४१।।

नाट्यशास्त्रं प्रयोक्तॄणां संस्कृताऽबोध-कालुषीम् ।
आलिप्य सर्वतोऽतिष्ठत्, प्रतिपालयदौज्ज्वलीम् ।।५४२।।

नैकेनाभिषवेणैषा शक्यतेऽवाप्तुमुच्चकैः ।
तपश्चरणसान्तत्ययोगोऽत्र तु कृतीयतु ।।५४३।।

भरतकोहलनारदतण्डुगा-
मभिनवोज्ज्वलसंसरणां गिरम्/श्रुतिम् ।
ऋषिदृशैव परिष्कृतिशुद्धया
यदितरां नटयोग उपास्महै ।।५४४।।

नेदं शास्त्रं किञ्चन कश्चिदसौ मन्त्र एव सावित्रः ।
योऽमुं जपति स गोप्ता भवति समेषां हि लोकानाम् ।।५४५।।

भरतमुनिः स्वयमेषोऽप्यस्ति न कश्चिज्जनश्चतुर्मुखताम् ।
चतुरभिनीतिविधानैर्विपाकमाप्तां तु तत्र पश्यामः ।।५४६।।

भारतमस्य हि वर्षं पीठो रङ्गाय तद्गताश्चापि ।
भावाः सर्वे सुस्था समे विवर्त्ताः शिवौ स्वयं यत्र ।।५४७।।

'अह'-कारप्रत्याहृतिवपुषि परिस्फूर्त्तिमाप्य वाग्देवी ।
विश्वायन्ती राजति तथाऽललङ्कारति स्फुरणैः ।।५४८।।

द्रष्टव्याः काव्यालङ्कारकारिका २५९-२६१

तस्या अस्या नूपुररणनां शृणोमि रङ्गे विपञ्चिकारुतिषु ।
तदुदीरितकवितार्थान् विभावयामश्च रामकृष्णतया ।।५४९।।

अहमेवालङ्कारो भवामि मम वै कलात्मके यागे ।
काव्यमुकुर आयतने स्वच्छे स्फुरणां लभेऽहमेवैकः ।।५५०।।

सेयं ममैव खेला
भरत इमां शिक्षयन् ममाचार्यः ।
शास्त्रमिदं तद् वैभव-
मनेन नूनं लभेय किं न समम्/शिवम् ।।५५१।।

यत् साहित्ये निभृतनिभृतं व्यापि तामिस्त्रमेते
कुर्मो यत्नं तदपनयने शोधमार्गाध्वनीनाः ।
मीमांसाया इह नवनवः किन्तु बाढं पुराणः
पन्थाः काव्येष्वपि न कुरुते नोपकारं बुधानाम् ।।५५२।।

यत् प्राचीनं निखिलमपि तन्मातृकाभ्यो यथावद्
ग्राह्यं, यद्वा विमलमतिभिर्यद्धि शुद्धं तदेव ।
पक्षद्वन्द्वे त्विह मम परः प्रीतये, यश्च पूर्वः
श्रद्धेयोऽसौ भवति विदुषां डाकुमेण्टेशनार्थम् ।।५५३।।

यत् संपाद्यं तदपि निपुणं वक्ति संपादनीयं
वस्तु, प्रेक्षा यदि न मलिना कीलिता वा न संवित् ।
मेयाधीना भवति कवितासीम्नि मानस्य सिद्धि-
र्मेयं यच्च स्फुरति पुरतस्तत् स्वयं सन्मतीनाम् ।।५५४।।

हंसः क्षीरं बलिभुगशनं, मिष्टमिष्टं पिपीलो-
ऽप्यन्वाख्याय प्रतिनियमयत्यात्मने निर्विकारम् ।
मूलामूलप्रतिविभजने नाट्यशास्त्रादितीर्थे-
ष्वन्तःप्रज्ञा प्रभवतु न किं निष्प्रमादं तथा नः ।।५५५।।

एतां तां वै शरणकुशलां मातरं संप्रपन्ना
वागर्थानां न खलु बिभिमः साधु संपादनासु ।
तच्चैतच्च द्वितयमपि वः संमुखीनं विधाय
विश्राम्यामस्त्विति बत सृतिं कान्दिशीकाः श्रयन्ते ।।५५६।।

यन्मेनुस्क्रिप्टनाम्ना व्यपदिशतितरां वर्त्तमानः सपर्या
भूतस्यैषा स्वहस्तो यदि नहि सुलभो ग्रन्थकारस्य साक्षात् ।
प्रज्ञा ब्रूतेऽर्चनीयः शिशुरपि जरतां सन्निपातैस्तदीयः
पक्षश्चेद् युक्तियुक्तो, घटयति यदि वा संगतिं स प्रबन्धे ।।५५७।।

चत्वारश्चेच्चतुर्भिः कथमपि घटिताः पाठकैः पाठभेदाः
युक्तश्चेत् पञ्चमः किं न घटयितुमसौ शक्यते पञ्चमेन ।
नायं स्वैरत्वदोषः कविवचसि भृशं संस्तुतानां तदीये-
ष्वर्थेष्वभ्यन्तराणामथच सुमनसां त्वेष संवादयोगः ।।५५८।।

चित्तग्रन्थिः कथञ्चिद् दृढमुपघटितः शक्यते नैष भेत्तुं
शीघ्रं कीरोऽपि नैवोत्सृजति हि नलिकां व्याधसंस्थापितां यत् ।
प्रज्ञायाः स प्रसादः, स च खलु विमलः कोऽपि सत्त्वातिरेकः
क्षीरे नीराद् विभज्य स्थितिमति, हृदयस्याभियोगो यदुच्चैः ।।५५९।।

अन्यप्रत्ययनेयतेव हृदयद्रोहोऽपि, तर्कासह-प्रेमेव
प्रतिभातमीलनमपि प्रज्ञाऽवमानः परः ।
ब्राह्म्या नूपुरनिक्वणेन भरिते श्रोत्रेन्द्रियव्योमनि
व्यावृत्तिं स्वत एव हन्त भजते वैजात्यघातोऽथवा ।।५६०।।

स्याद्वादे ब्रह्मवादी बत बत नितरां श्राद्ध एषोऽद्य सर्वा-
स्त्यक्त्वा प्रामाण्यसेतून्, यदि बहुमततः सत्य-कैवल्यगर्हा ।
काश्यां कुल्या अनेकाः, भवति भगवती केवला किञ्च गङ्गा
श्रद्धा स्यात् कुत्र नायं सुमनसि लभते नोत्तरं प्रश्नराजः।।५६१।।

आनन्दकोषस्योल्लासे
शब्दब्रह्म-विभाविता ।
अलङ्कृतार्थसंवित्तिः
कविता सर्वमङ्गला ।।

काव्यालङ्कारकारिका १.१

०००

## कविता

कविता मणिपञ्जरे चिदाख्ये
विधृता कापि शुकी हिरण्यवर्णा ।
अनुवादकला-विचक्षणा या
रटति स्वैरमहो रहःकथां नः ।।५६२।।

कविता शितिकण्ठ-कण्ठकूपाऽ-
नल-दाह-प्रशमाय संप्रवृत्ता ।
अविमुक्त-किशोरभाव-लेखा
प्रतिपच्चन्द्रकला रसैकमूर्त्तिः ।।५६३।।

विहितं सहकारमञ्जरीभिर्मृदु
तल्पं चिति-चञ्चरीकपत्न्यै ।
कवितेति निरुच्यते प्रपन्नै-
र्वचसां नृत्यविधौ स्वतः प्रवृत्ते ।।५६४।।

कविता स कपर्द ईश्वरीयो
विधुना लाञ्छितविग्रहात् तु यस्मात् ।
प्रभवत्यमरापगा त्रिलोक्याः
परमं मङ्गलमम्मयीव गौरी ।।५६५।।

कविता वलयानि यक्षपत्न्याः
परिशिञ्जन्ति विनीयतेतरां यैः ।
अहरत्यय-मत्त-चित्तधातु-
र्ललिते ताण्डविते शिखी सतालम् ।।५६६।।

कविता मुरलीसखस्य विष्णोः
करलग्नं नवनीतपिण्डयुग्मम् ।
भुवनत्रय-पालकोऽपि यस्मै
वरयामास विभुः स चौरलीलाम् ॥५६७॥

कविता मधुसंभृतं महार्हं
रतिजानेर्ननु षष्ठमस्त्ररत्नम् ।
कवितैव वचोधिदेवतायाः
करकञ्जेन धृतः शुकस्य डिम्भः ॥५६८॥

कवितोच्छ्वसितं त्रयीपुरन्ध्र्याः
कविता स्वस्तिवचो मनुष्यजातेः ।
कविता परमो विभूतियोगो
विरजस्कस्य परात्परस्य पुंसः ॥५६९॥

कविता नयनं शिवे तृतीयं
कविता वक्षसि कौस्तुभो मुरारेः ।
कविता परितोऽभिसञ्चरिष्णौ
पवमाने मधुसौरभस्य योगः ॥५७०॥

कविता न परस्य शोषणाभि-
र्निजकुक्षेः परितर्पणेन तोषः ।
नलिनी जलसंभृते तटाके
जनिमाप्नोति, न पावकस्य कुण्डे ॥५७१॥

कविता परिपूर्णशर्व्वरीश-
ग्रसनोल्लासकटुर्न राहुदंष्ट्रा ।
निजसन्ततिभक्षणाऽनुरक्ता
न हि मातृष्वभिगण्यते भुजङ्गी ॥५७२॥

कविता जमदग्निकामधेनु-
र्न पुनः कापि सहस्रबाहुगर्धा ।
कविताऽस्थिचयो दधीचिदत्तो
न पुनर्यः किल दुन्दुभिप्रक्लृप्तः ।।५७३।।

कविता जनकात्मजा नमस्या
न दशग्रीवभुजाटवी न लङ्का ।
सुहृदः कविता स कोऽपि वह्निः
शिशिरोऽजायत यो विदेहपुत्र्यै ।।५७४।।

प्रथमस्य स वै कवेः कुटीरः
कविता यत्र सुतावसूत सीता ।
अथ सा कवितैव लोकहेतो-
र्यदसौ गर्भवतीसतीनिरासः ।।५७५।।

कविता तपसां तपोधनानां
परिपाकः खलु कोऽपि मङ्गलात्मा ।
मुखरीकृतभूतसामरस्यं
कविता स्वस्त्ययनं चराचरस्य ।।५७६।।

कविता भगतस्य पाशपीठे
स्मितिरेखा दृढनिश्चयस्य साध्वी ।
कविता न पलायनस्य मन्त्रः
कवितोत्साहभृतां स्वपाणिवादः ।।५७७।।

कविता न हि जीविका कवीनां
कवितोल्लासमयं स्वदानसत्रम् ।
कविता न वणिग्वधूर्वराकी
द्रविणाय श्रितचित्रवस्तुसार्था ।।५७८।।

कविता न बुभुक्षितस्य पेया
न बलीवर्द्दकुले कडङ्गरं सा ।
कविता परितृप्तिमागतानां
मुखपद्मे निभृता नु नागवल्ली ।।५७९।।

कविता द्रुपदात्मजोत्तमाङ्गे
गतपाशो ननु कोऽपि केशपाशः ।
कविता कुटलात्मजस्य शीर्षे
परिकीर्णा ननु सा शिखाभुजङ्गी ।।५८०।।

कविता धृतमुण्डमालिकाया
द्रुतकाल्याः करपल्लवे कृपाणः ।
कविता यदिवा तदास्यरन्ध्रे
विलसन्ती रसनानटी प्रचण्डा ।।५८१।।

कविता यदि भीष्मगा प्रतिज्ञा
ननु भीमेन कृतापि सैव सेयम् ।
कविता न युधिष्ठिरस्य नीति-
र्धृतराष्ट्रस्य विपर्य्ययः स कश्चित् ।।५८२।।

अथवा, चितिदुर्ग्गजौहराग्नि-
ज्वलितज्वालचये पतिव्रताभिः ।
लिखिता खलु या लिपिः स्वहोमैः
कविता तत्र परिक्रमां तनोति ।।५८३।।

कविता न हि मद्यपानगोष्ठी
कविता वा नहि पीतपत्रमैत्री ।
कविता न हि कापि बुद्धिखर्जा
तिलतालीकरणेऽद्वितीयगर्ज्जा ।।५८४।।

कविता न हि मेघदूतमात्रं
कविता सैनिकहेतयोऽपि युद्धे ।
चरमेण निराकृतेऽरिगोत्रे
प्रथमस्य प्रसरोऽभिलक्ष्यते यत् ।।५८५।।

कविता न हि हंसमात्रचञ्चूः
पयसोर्या खलु भेदने नदीष्णा ।
कविता ननु सा मयूरचञ्चू-
रपि काकोदरचूर्ण्णने पटुर्या ।।५८६।।

कविता निजराष्ट्रपालनस्य
गुरुगोविन्दसुतद्वयस्य चैत्यम् ।
कविता गुरुनानकस्य वाणी
श्रुतिसर्वस्वमयं हि यत्र शैत्यम् ।।५८७।।

कविता प्रविरोपणं व्रणानां
कविता न व्रणजन्मदानदीक्षा ।
कवयः! कविता द्विजिह्वता नो
शवयात्रा ननु सा मनुष्यजातेः ।।५८८।।

कविता परमाणु-रक्तबीजे
शिवदूती, विघसव्रते नृसिंहे ।
कवितैव च शालुपक्षिराजः
कविता विश्वमहौषधं प्रसिद्धम् ।।५८९।।

कविता गलदश्रुधारमन्तः-
करणं कर्म्मरतिश्च निर्विरामा ।
भुवनत्रितयेऽपि यत्प्रतीकस्-
त्रिषु कालेषु महामनाः स रामः ।।५९०।।

प्रबलं कवितुः समाधियोगं
सरसे भावमयेऽत्र वस्तुसंघे ।
कवितेति विभावयन्ति सन्तः
स्तुतिमाप्तेन हृदैव भाव्यमानम् ।।५९१।।

कविता विभुता हृदः कृशस्य
कृशता वा विभुनोऽस्य पारवश्यात् ।
कृशता-विभुता-त्रिवेणिकायां
कविता काचन दिव्यहेमहंसी ।।५९२।।

कविता वटपादपोऽक्षयाख्यः
कविता कन्दरगा स्वयंप्रभा च ।
कविता नरवानरेषु मैत्री
कविता रामकथैव भारतीया ।।५९३।।

कविता क्रियमाणकर्म्मकोषः
कविता सञ्चितनाशनः प्रबोधः ।
कविता चितिभित्तिचित्रकृत्ये
विविधारब्धविकर्मकर्मभोगः ।।५९४।।

कविता हृदयस्य भावबन्धो
निरुपाधिश्च निरन्तरश्च कश्चित् ।
नलिनीशशिनोः पराङ्मुखत्वे
व्यतिरेको ननु केन शीलितोऽत्र ।।५९५।।

कविता-शतपत्र-चञ्चरीकी
चितिरेषा क्षिपतीह यान् परागान् ।
प्रतिभान्ति त एव तत्र तत्र
बहुधा दर्शनमौक्तिकानि भूत्वा ।।५९६।।

कविता हृदयस्य वाक्यशेषः
कथितेऽनुक्ततया प्रकाशमानः ।
कविता कथिता कथा पुराणी,
न पुराणी न नवा, सुराङ्गना सा ।।५९७।।

अबला कविता कदापि नासी-
दबलो वा न कविः कदाप्यलक्षि ।
कवयस् ! त्यजताबलत्वमिथ्या-
ग्रह-वेतालमिमं प्रचेष्टमानम् ।।५९८।।

निगमागमसंज्ञकौ सुतौ द्वौ
प्रतिभापुंसवनी पुरः प्रसूय ।
प्रवयास्तपसा तु यां विलेभे
तनयां तां कवितेति भावयामः ।।५९९।।

कवितेऽसि रुतिर्न वायसानां
त्वमहो शब्दमयी कदापि नासीः ।
त्वमयेऽनुभवो विनापि शब्दं
हृदयेनानुभवन्ति कामिनो यम् ।।६००।।

न शुकः कविता, न पञ्जरोऽस्य
प्रतिशब्दोऽपि तयोर्न काव्यबन्धः ।
हहहा ननु विस्मृता भिदाऽद्य
पशवो धिक् पुरुषान् प्रशिक्षयन्ते ।।६०१।।

शिवयोर् दुहिता, तयोर्हि नित्यं
विलसन्ती, सततं हि नर्मगर्भा ।
प्रलयेऽप्यलया प्रसादसौम्या
कविते! त्वं ननु नर्मदा, नमस्ते ।।६०२।।

कविते! जगदम्बिके! त्वदीयं
शतपत्रं ननु तुभ्यमर्पयामि ।
जननीं प्रविहाय शावकानां
विरुतानि क्व परत्र वा पतन्ति ।।६०३।।

सनातनस्य मे रेवाप्रसादस्य द्विवेदिनः ।
काव्यकाव्यमिदं भूयात् काव्यशास्त्रस्य सौरभम् ।।६०४।।

इत्येवं परिपूर्त्तिमितः सनातनकविरेवाप्रसाद-
द्विवेदिघटितः साहित्यालङ्कारः ।।
०४.०९.२०१५
काशी

।।ॐ तत् सत् ।।

०००

# प्रकीर्णाः श्लोकाः

अद्यापि तुलसीदासगोस्वामिकवितां प्रति ।
स्वामिसंन्यासिधर्मोपदेशेष्वस्ति समादरः ।।१।।

उत्प्रेक्षणं चाऽप्युपमाननं च
संविल्लतायाः फलयुग्ममेतत् ।
चिन्तामणिः सर्वदुघः कलासु
समाजिकानामथ सत्कवीनाम् ।।२।।

यत्रास्ति तत्राऽस्तु विदांवराणां
चिन्तामणिः साधक एष पूर्त्यै ।
उषःसु सर्वास्वपि किं न नूत्नान्
सौरान् करान् प्रत्यहमर्चयामः ।।३।।

यः पट्टणादिष्वभियोक्तृशक्रै-
र्धारागतग्रन्थसहस्रकोषः ।
संरक्षितस्तस्य परीक्षणाभि-
र्भोजस्य साहित्यमपि प्रकाशेत् ।।४।।

सूत्राणि चेत् सन्ति सुरक्षितानि
भाष्याणि तेषाञ्च बृहद्वपूंषि ।
कालस्य कुक्षेर्बृहति प्रमाणे
भोजस्य वाचोऽपि हि रक्षिताः स्युः ।। ५।।

यदुच्यते दण्डिनि तत् त्वसारं
यद् भामहे हन्त तदेव सारम् ।
भिदेषका केवल-विप्रकृष्टेः
सूतिर्धिगेषा यदि वा घृणायाः ।।६।।

ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं
धीः पश्यति श्रान्तिमवेदयन्ती ।
फलं तदाद्यैः परिकल्पितानां
सत्यं सुसंशोधनधोरणीनाम् ।।७।।

सर्वो न सर्वज्ञति किन्तु यावद्
वेत्त्येष तत्रास्ति हितं तपश्चेत् ।
मान्यं हि तत्, पूरयितुं क्षमन्ते
विप्रूंषि किं नो घटमापतन्ति ।।८।।

यद् वाङ्मयं किञ्चन पौरुषेयं
तस्मिन्न हानिः परिवर्त्तनेऽपि ।
साध्यं यदि स्यात् प्रतिपाद्यरूपं
सुरक्षितं तत्र यथावदेव ।।९।।

सैषा कथा चुम्बति नाट्यशास्त्रं
प्रकाशशृङ्गारमिमं च तुल्यम् ।
विज्ञाय विज्ञाः प्रविभाजयेयु-
र्वर्णात्मकं विग्रहमात्मबुद्ध्या ।।१०।।

भोजः स्वयं स्वैरमुपादधाति
पाठान्तराण्यत्र निदर्शनेषु ।
भोजेऽपि पाठान्तरयोगगम्यं
मूलं समुद्भावयितुं क्षमाः स्मः ।।११।।

मथ्नन्ति ये केवलमेकमब्धि-
मृच्छन्ति चेद् रत्नचतुर्दशीं ते ।
कियन्ति रत्नानि तु ते लभेरन्
मथ्नन्तु षट्त्रिंशदिमाँस्तु येऽब्धीन् ।।१२।।

साहित्यशृङ्गारमिमं प्रकाश-
रूपं पयोराशिशताधिकं तु ।
विभाव्य धीचापलमुत्सृजामः
साहित्यसाम्राज्यमथ श्रयामः ।।१३।।

संपादनं प्राक्तन-शास्त्र-काव्य-
लेखेषु वैविध्यकषायितेषु ।
मार्गेण येनाद्य तु शक्य एष
सुश्लोकितः श्रीमति कालिदासे ।।१४।।

श्रीकालिदासस्य गुरोरपीयं
शास्त्रे सृतिर्दिव्यतमा श्रिताऽऽस्ते ।
यस्याश्रयस्तौ ननु तस्य भोज-
देवस्य शास्त्रेऽपि च सैव युक्ता ।।१५।।

बभूव का वा लिपिरस्य पाण्डु-
ग्रन्थे न वै तद् विवृतं पुराणैः ।
न वाधिमद्रासमधिश्रयाणै-
र्ग्रन्थालयानामधिकारजातम् ।।१६।।

उत्प्रेक्ष्यते भोजनृपस्वहस्त-
लिपिं निरीक्ष्यास्ति तु नागरी सा ।
संश्लिष्टलेखाऽप्यसकौ न शक्ता
पदप्रकाशाय परिस्फुटाय ।।१७।।

तिमयश्च तिमिङ्गिलाश्च तद्वद्
गिलने तस्य समुद्धुरा अनेके ।
विलसन्ति सराघवा महाब्धिः
स हि भोजः क इवास्य पारमेतु ।।१८।।

धनिकाश्च धनञ्जयाश्च धाम्नि
समजायन्त कवीश्वरा हि यत्र ।
तदिदं यदि भोजमुत्प्रसूते
भरतस्यापरविग्रहं क्षमं तत् ।।१९।।

षडथो दशकत्रयं वितानं
भुवनानां सविसृष्टि सृष्टिचक्रम् ।
तनुते ननु यः प्रकाशरूपः
स हि शृङ्गार इहास्ति पूर्णमूर्त्तिः ।।२०।।

ध्वनिवादिभिरस्य वर्ग एको
गणितोऽनन्तवितानकस्य तेऽपि ।
भरतप्रतिपालनाय बद्ध-
कटयः सन्ति समेऽपि नास्ति भेदः ।।२१।।

दशमं शतकं जयत्यपूर्वा
यदिहैवाभवदार्य्यकाव्यसृष्टिः ।
इह चैव समीक्षणाचणानां
प्रवरा अप्यभवँश्च भोजतुल्याः ।।२२।।

समपादयदेष एव धीरो
नटशास्त्रं भरतस्य दण्डिनं च ।
सममानयदेष वेदविद्या-
पथमुच्चैः सुगतान्ववाय-विज्ञः ।।२३।।

कलहेन कषायितावुभाव-
प्यपरान्तौ भरतावनेरभूताम् ।
अधिमालवगुर्जरं विनाश-
कृदसौ त्रिः कलिरापदेव जन्यम् ।।२४।।

अखिलोऽपि च शास्त्रराशिरस्मिन्
समये सङ्क्रमणामवाप, यावत् ।
अपरान्तसमुद्रवीचिभङ्गाः
अथ तिर्यक् प्रससार केरलान्तम् ।।२५।।

असकावपि भोजराजकोषः
क्रममेतं प्रतिपद्य केरलेषु ।
निभृतं शरणं प्रपद्य गुप्तो
विकलाङ्गोऽपि भवन्नभूत् सजीवः ।।२६।।

उदजीवयदेनमार्यबुद्धिः
प्रतिलिप्या ननु कोऽपि 'कुप्पु'-शास्त्री ।
इममेव निधानकोषमाप्य
बहु कार्यं कृतवान् स राघवार्यः ।।२७।।

अपरोऽपि यतीश्वरस्तमेतं
कथमप्यापयदेव मुद्रणं यत् ।
स च राघव आत्मकार्यमेतत्
प्रददौ हार्डवराय मुद्रणार्थम् ।। २८।।

अधिभूमि समृद्ध एष विद्या-
लय उच्चैस्तमकीर्त्ति-केन्द्र-कोऽपि ।
शतकार्धमतीत्य खण्डमेकं
कथमप्यापयत प्रकाशमस्य ।।२९।।

अपि तत्र न काचिदस्ति सूचिर्नच काचिद् विवृतिः प्रतीकहेतोः ।
इदमस्ति सुपुस्तकं महार्हं परमास्ते न हि शास्त्रमार्यपूज्यम् ।।३०।।

इह स प्रविसृज्य मुग्धिमानं परिपुष्यत्तनुरत्नकश्चकास्ति ।
सुषिराणि बहूनि सन्ति तस्मिन्ननु तत् सर्वमिहास्ति शुद्धिमुग्धम् ।।३१।।

# साहित्यालङ्कारकारिकानुक्रमः

000

# आचार्य रेवाप्रसादद्विवेदी
## जीवनपरिचय

**नाम** आचार्य रेवाप्रसाद द्विवेदी (जन्म १९३५) जन्मस्थान : नादनेर, मध्यप्रदेश

**गुरुनाम** कवितार्किकचक्रवर्ती पं० महादेव शास्त्री, अध्यक्ष, साहित्यविभाग, संस्कृतसंकाय, काशीहिन्दूविश्वविद्यालय, काशीपीठ के शङ्कराचार्य स्वामी महेश्वरानन्द सरस्वती

**पिता** स्व. पं० नर्मदाप्रसाद दुबे, निवास : नादनेर, (सीहोर), मध्यप्रदेश

### शिक्षा

संस्कृत की पारम्परिक शिक्षा मध्यमा १९५० प्रथमश्रेणी गवर्नमेण्ट संस्कृत कालेज परीक्षा, वाराणसी

**शास्त्री** (त्रिवर्षीय) १९५३

**शास्त्राचार्य** (त्रिवर्षीय) १९५६, का.हि.वि.वि.

**एम.ए.** (संस्कृत) १९५७-५९ का.हि.वि.वि.

उक्त तीनों परीक्षाओं में प्रथम श्रेणी तथा प्रथम स्थान

**पीएच.डी.** रविशङ्करविश्वविद्यालय, रायपुर १९६६ शोधप्रबन्ध पटना से प्रकाशित **डी.लिट.** रानीदुर्गावतीविश्वविद्यालय, जबलपुर १९७७ प्रकाशित ग्रन्थों पर

### सेवाकार्य

मध्यप्रदेश के तत्कालीन संस्कृतमहाविद्यालय रायपुर में राजपत्रित लेक्चरर पद पर २१.११.१९५९ से १९६४ तक साहित्यविषय का अध्यापन, पश्चात् पदोन्नति पर सहायकप्राध्यापक के रूप में १९७० तक अध्यापन, पश्चात् काशीहिन्दूविश्वविद्यालय में ही रीडर पद पर नियुक्त १९७०-७५ तक इसके पश्चात् १९९० तक प्रोफेसर, पश्चात्

१९९३ से यहीं सम्मानित प्राध्यापक (इमेरिटस प्रोफेसर) आजीवन।

**प्रथम ग्रन्थ**

संस्कृत में प्रथम ग्रन्थ 'सीताचरित' नामक १० सर्गों का क्रान्तिकारी महाकाव्य, हिन्दी अनुवाद सहित अब तक पाँच बार मुद्रित।

हिन्दी में प्रथम ग्रन्थ : 'व्यक्तिविवेक' का हिन्दीभाष्य १९६४ में प्रकाशित और मध्यप्रदेश साहित्य-समिति से मित्रपुरस्कार द्वारा पुरस्कृत।

**साहित्यसर्जना**

तीन पीढ़ियों का उद्धार :

१. **पहली पीढ़ी :** भरतमुनि (ई.पू.३००) के नाट्शास्त्र के काव्यलक्षण खण्ड का सर्वप्रथम मूलपाठनिर्धारण तथा हिन्दीभाष्य। शिमला के भारतीय उच्च अनुसंधान केन्द्र से २००५ में प्रकाशित।

२. **दूसरी पीढ़ी :** महाकवि कालिदास (ई.पू.२-१शती) की सातों कृतियों का मूलपाठनिर्धारण तथा हिन्दी अनुवाद। इसका तीसरा संस्करण उज्जैन की कालिदाससंस्कृतअकादमी से २००८ में प्रकाशित। (अत्यन्त महत्वपूर्ण कार्य)

३. **तीसरी पीढ़ी :**

(क) शृङ्गारप्रकाश (पृष्ठसंख्या २२३५) का उद्धार। पूरे ग्रन्थ का प्रकाशन इन्दिरागाँधी- राष्ट्रीयकलाकेन्द्र, दिल्ली से २००७ में हुआ।

(ख) शृङ्गारप्रकाश का सही नाम साहित्यप्रकाश था। शृङ्गारप्रकाश के उक्त संस्करण के पश्चात् 'साहित्यप्रकाश' नाम से ही उसके साहित्यशास्त्रीय अंश का पृष्ठ ६०४ में पृथक् प्रकाशन।

(ग) शृङ्गारप्रकाश का हिन्दी अनुवाद भी लगभग पूर्ण।

इस बीच संस्कृतकाव्यशास्त्र के कठिन और विशाल ग्रन्थों का संपादन तथा हिन्दी भाष्य प्रकाशित।

## सम्पादनकार्य

इन दिनों **'साहित्यशास्त्रसमुच्चय'** नाम से सम्पूर्ण साहित्यशास्त्र को प्रकाशित करने की योजना के अन्तर्गत निम्नलिखित भाग प्रकाशित-

१. **प्रथम भाग** : दण्डी, भामह, उद्भट, वामन तथा रुद्रट के साहित्यशास्त्रीय ग्रन्थों का प्रकाशन। उद्भट के साथ प्रतीहारेन्दुराज की टीका तथा रुद्रट के साथ नमिसाधु (जैन) की टीका भी प्रकाशित। पृष्ठसं. ५६७

२. **द्वितीय भाग** : आनन्दवर्द्धन तथा अभिनवगुप्त के साहित्यशास्त्रीय ग्रन्थ ध्वन्यालोक लोचन पृष्ठसं. ३०५, प्रकाशन वर्ष २०१३

३. **तृतीय भाग** : राजशेखर, कुन्तक तथा क्षेमेन्द्र, पृ.सं.४९१ प्रकाशन वर्ष २०१५

४. **चतुर्थ भाग** : भोजराज का साहित्यप्रकाश प्रकाशन वर्ष २०१३, पृष्ठ संख्या ६०४

५. **पञ्चम भाग** : महिमभट्टकृत व्यक्तिविवेक, मुकुलभट्टकृत अभिधावृत्तमातृका, मम्मटभट्टकृत काव्यप्रकाश तथा शब्दव्यापार-विचार पृष्ठसंख्या ४१७।

६. **षष्ठ भाग** : चन्द्रालोकः गागाभट्टीया टीका, साहित्यदर्पण तथा मन्दारमरन्दचम्पू पृष्ठसंख्या ७६७

सूच्य : आगे लगभग पाँच भाग और बनाने हैं।

## स्वयं का मौलिक काव्यशास्त्र

१. **काव्यालङ्कारकारिका** सन् १९७७ सम्प्रति इसका पञ्चम और सर्वाङ्ग सम्पूर्ण संस्करण २०१४, कारिका १८८ पर संस्कृत वृत्ति और हिन्दी तथा अंग्रेजी अनुवाद। उच्चस्तरीय शास्त्रीय संस्कृत में लिखित नई रचना।

२. **नाट्यानुशासन** पाँच अनुच्छेद, २००४, द्वितीय संस्करण

३. **साहित्यालङ्कारः** कारिका ६०० से अधिक। मूल आगम अलंकारात्मवाद जिसमें तीन क्रान्तियों का विशद विवरण,

१. प्रथमक्रान्ति ध्वनिवाद (अमान्य), २. द्वितीयक्रान्ति शब्द-शक्तिवाद(अमान्य) तथा ३. तृतीयक्रान्ति रसालङ्कारात्मवाद (मान्य) के प्रवर्तक आचार्य को हिन्दीसंस्थान २०१४ के सौहार्दसम्मान (संस्कृत) से सम्मानित किया है।

## अन्य पुरस्कार तथा सम्मान

१. राष्ट्रपति पुरस्कार (संस्कृत सर्टिफिकेट ऑफ ऑनर १९७८ से)
२. साहित्य अकादमी पुरस्कार, १९९१ दिल्ली
३. श्रीवाणी अलङ्करण, १९९९ दिल्ली
४. वाल्मीकि पुरस्कार (उ.प्र. संस्कृत संस्थान लखनऊ २००४)
५. विश्वभारती पुरस्कार (उ.प्र. संस्कृत संस्थान लखनऊ २००५)
६. व्यास पुरस्कार
    १. मध्यप्रदेश से १९६६ में
    २. यू.जी.सी., दिल्ली २००५
    ३. दिल्लीप्रशासन, दिल्ली, २०१०
७. सौहार्दसम्मान (संस्कृत) उ०प्र० हिन्दी संस्थान २०१४

**सम्मान** : महामहोपाध्याय उपाधि तीन विश्वविद्यालयों से -
    १. तिरुपतिसंस्कृतविद्यापीठ, तिरुपति १९९९
    २. हिन्दीसाहित्यसम्मेलन, प्रयाग २००३
    ३. लालबहादुरशास्त्रीसंस्कृत विद्यापीठ, दिल्ली २००९

**अभिनवकालिदास** शङ्कराचार्य स्वामी स्वरूपानन्दजी महाराज २००३
**शास्त्रकलानिधिः** मद्राससंस्कृतकालेज, शताब्दीवर्ष २००६
**प्रज्ञाभारती**, कलकत्ता २०११
**साहित्यरत्न** स्वामी रामभद्राचार्य, चित्रकूट, २००८
**साहित्यकौस्तुभ** स्वामी जयेन्द्रसरस्वतीजी, काञ्ची २०१०
**सम्मानितसदस्य** एशियाटिकसोसाइटी, मुम्बई १९८३

०००

## महामहोपाध्याय प्रो. रेवाप्रसाद द्विवेदी

**रचनाएँ** : मौलिक-२६, महाकाव्य-३, काव्य-२५, नाटक-२, नवीनशास्त्र-३ कथा-३, मोनोग्राफ-५, शास्त्रीय कृतियों का हिन्दीभाष्य-७, समीक्षापूर्ण संपादन-२१, स्वहस्तलिखित हस्तलेख-१८, कालिदासशब्दानुक्रमकोष-१९५८।

**संक्षेप** : कासंवा = कालिदाससंस्थान, वाराणसी-५; चौसंसी = चौखम्बासंस्कृत-सीरीज, वाराणसी-१; काहिविवि = काशीहिन्दूविश्वविद्यालय, वाराणसी-५; सादि = साहित्य अकादमी दिल्ली, संपसा = संस्कृतपरिषद् सागर।

### महाकाव्य

१. उत्तरसीताचरितम् : १० सर्ग, ६९९ पद्य, हिन्दी अनुवाद सहित, पञ्चम संस्करण, १९९०।

२. स्वातन्त्र्यसंभवम् : १-२८ सर्ग, प्रकाशक-कालिदाससंस्थान, १९९०।
१-३३ सर्ग, पद्य २६२०, हिन्दी अनुवाद सहित, प्रकाशक-का.हि.वि.वि., २०००।
१-७५ सर्ग, पद्य ६०६४, प्रकाशक कालिदाससंस्थानम्, २०११।

३. कुमारविजयम् : १-११ सर्ग, पद्य ९०२, हिन्दी अनुवाद सहित, प्रथम संस्करण २००२, द्वितीय संस्करण २००७।

### काव्य

१. शतपत्रम् (पद्य ११५, हिन्दी अनुवाद सहित, १९८७); २. प्रमथः (९ काव्य, पद्य ३५३, १९८८, द्वितीय संस्करण प्रकाशनाधीन); ३. श्रीरेवाभद्रपीठम् (१५३ पद्य, द्वितीय संस्करण, हिन्दी अनुवाद सहित, २००२); ४. शकटारम् (१२१ पद्य, नेलसनमण्डेलामुक्तिकाव्य, हिन्दी अनुवाद सहित २०००); ५. शरभङ्गम् (१११ पद्य, अध्यात्मरहस्यकाव्य, हिन्दी अनुवाद सहित २००१); ६. मतान्तरम् (११३ पद्य, दुर्गविडम्बनाकाव्य, हिन्दी अनुवाद सहित, २००१); ७-९. शरशय्या (हिन्दी अनुवाद सहित, ३४९ पद्य, २००२, १. सुर्गतो ब्रवीति-११७ पद्य, बुद्धमूर्तिध्वंसभर्त्सना, २. वृद्धकुमारि!-१२९ पद्य, मुगलशाहजादियों की मनोदशा, ३. शरशय्या-१०३ पद्य, भीष्म की परिवेदना); १०-१२. अमरीका (३२१ पद्य, २००८, १. अमरीका-२४६ पद्य, २. एतत्तु याचामहे-५५ पद्य, ३. वियेहोमो नियेधानले-२० पद्य); १३-१५. रामपरिसंख्या (५४७ पद्य, २००८, १. रामपरिसंख्या-२२१ पद्य, २. अहमस्यहमेव-२०२ पद्य, ३. अयि शकुन्तिके-१२४ पद्य); १६. हरिहरावदानकाव्यम् (२६१ पद्य, २००९, हिन्दी अनुवाद सहित); १७. अयि नीलनदि! (२४२ पद्य, २०१०, हिन्दी अनुवाद सहित); १८. रत्नस्वरूपावदानकाव्यम् (३०७ पद्य, २०१०); १९. जयेन्द्रसरस्वती-पदावदानम् (१२३ पद्य, २०११); २०. नमोनिर्वाचनम् (प्रथम एवं द्वितीय संस्करण २०१४,२०१५)।

### नाटक

१. यूथिका-४ अङ्क, १९७६, कासंवा, द्वि.सं. २०१४।
२. सप्तर्षिकाङ्ग्रेसम्-१० अङ्क, कासंवा, २०००।

### नवीनशास्त्र रचना

१. काव्यलङ्कारकारिका-तृतीयसंस्करण कासंवा, २०१४, संस्कृत भाष्य, हिन्दी तथा अंग्रेजी अनुवाद सहित २. नाट्यानुशासनम्-१-५ भाग, १. नाट्यानुशासनम्, २. भरतदर्शनम्, ३. नाट्यशारीरकम्, ४. कलासमाधिः, ५. रसभोगः-सभी हिन्दी अनुवाद सहित, कासंवा, १९९६, द्वि.सं. २००८। ३. साहित्यशारीरकम्-साहित्यशास्त्र के इतिहास का नवीनक्रम, संस्कृत-विश्वविध्यालय, वाराणसी, १९९८।

४. अलं ब्रह्म, कासंवा, २००५।

कथा-१. त्रिपादी, २. कोऽसौ, ३. कस्य दोषः आदि।

### मोनोग्राफ

१. आनन्दवर्धन-हिन्दी ग्रन्थ अकादमी, भोपाल, १९७३।
२. भारतीय काव्यसमीक्षा में अलङ्कारसिद्धान्त-मेकमिलनएण्डकम्पनी, दिल्ली, १९८०।
३. साहित्यसन्दर्भा-कासंवा, १९७०।
४. कालिदास-मानवशिल्पी-महाकविः, कासंवा, १९७३।
५. संस्कृत काव्यशास्त्र का आलोचनात्मक इतिहास, कासंवा, २००७।
६. कालिदास-भारती, कासंवा, २००५।
७. साहित्यालङ्कारः (६५७ का.)

### हिन्दी-भाष्य

१-२. व्यक्तिविवेक-तथा उस पर रुय्यक का व्याख्यान, चौसंसी, वाराणसी, १९६४।
३-४. अलङ्कारसर्वस्व तथा अलङ्कारविमर्शिनी-चौसंसी, वाराणसी, १९७१।
५. अभिधावृत्तमातृका-चौसंसी, वाराणसी, १९७३।
६. शब्दव्यापारविचारः-चौसंसी, वाराणसी, १९७४।
७. काव्यलङ्कारकारिका-कासंवा, वाराणसी, २००१।

**संस्कृतवृत्ति, हिन्दी, अंग्रेजी अनुवाद**-१. काव्यालङ्कारकारिका-कासंवा, २००१, तृ.सं. २०१४, कासंवा।

### सम्पादन

१. रघुवंशदर्पण-हेमेनाद्रिकृत रघुवंशटीका, पहली बार संपादित और प्रकाशित, काशीप्रसादजायसवाल, शोधसंस्थान, पटना-१९७३।
२. कालिदासग्रन्थावली-१९७६ तथा १९८६, २००८ में प्रकाशित, काहिविवि। ऋतुसंहारम्, मेघदूतम्, कुमारसंभवम् १-८ सर्ग, रघुवंशम् १-१९ सर्ग, मालविकाग्निमित्रम्, विक्रमोर्वशीयम् तथा अभिज्ञानशाकुन्तलम्। तृतीय सं. २००७ में का.अ., उज्जैन।
३. ऋतुसंहारम्-सादि, दिल्ली, १९९०। कुमारसम्भवम्-अरुणगिरिनाथ तथा नारायण की टीका के साथ, सं.सं.वि.वि. २००७।
४. रघुवंशम्-सादि, दिल्ली, १९९३, सभी प्राचीन हस्तलिखित प्रतियों, साहित्यशास्त्र, ब्राह्मीलिपि तथा अपनी दृष्टि के आधार पर निर्धारित मूलपाठ एवं प्रचुर पाठान्तरों की पादटिप्पणियों से समृद्ध, इनमें दिखाए संशोधनों के लिए स्वयं नए हस्तलिखित पाण्डुग्रन्थ भी तैय्यार। अरुणगिरिनाथ तथा नारायण की टीकाओं के साथ २००८, सं.सं.वि.वि.।
५. काव्यप्रकाश-साहित्यचूडामणि, विवरण तथा संशोधित मूलपाठ, काहिविवि, १९८१।
६. काव्यप्रकाश-संशोधित मूलपाठ तथा महत्त्वपूर्ण टिप्पणियों सहित, काहिविवि, १९८१।
७. रसार्णवसुधाकर-कुछ संशोधनसहित, १९७०, संपसा।
८. भारतीय काव्यमीमांसा-दर्शनविभाग, राजस्थान विश्वविद्यालय, जयपुर, १९८७।
९. नाट्यशास्त्रम् (काव्यलक्षणखण्ड) आई.आई.ए.एस., शिमला, २००५।
१०. शृङ्गारप्रकाश-(१-३६ पूर्ण) भूमिका आदि ८८ पृ., मूल १६३०, परिशिष्ट-३५०=२०६८, कासंवा, २००८।
११. ध्वन्यालोकः (सलोचनः), कासंवा, २०१३।
१२. साहित्यप्रकाशः (शृङ्गारप्रकाशसारः), कासंवा, २०१३।
१३. साहित्यशास्त्रसमुच्चयः प्रथम भाग से षष्ठ भाग तक प्रकाशित, प्र. कासंवा, २०१४-२०१६।

**शोधनिबन्ध**-लगभग १२५ हिन्दी, अंग्रेजी तथा संस्कृत में।

**लोकप्रियग्रन्थ**-१. सत्यनारायणव्रतकथा-हिन्दी सहित सही मूलपाठ १९९९, कासंवा।
२. शिवमहिम्नःस्तोत्र-संशोधित मूल तथा हिन्दी अनुवाद, १९९९, कासंवा।

नोट : कालिदाससंस्थान से प्रकाशित ग्रन्थ '२८ महामनापुरी, पोस्ट-काहिविवि, वाराणसी-५' इस पते पर उपलब्ध।



प्रकाशकम् - कालिदाससंस्थानम्, वाराणसी-5

